# वृत्तरत्नाकरम्







प्रकाशक—

**मेहरचन्द्र लक्ष्मणदास**

अध्यक्ष—संस्कृत पुस्तकालय,

सैदमिट्ठा बाज़ार, लाहौर ।



# वृत्तरत्नाकरम्

## केदारभट्टप्रणीतम्

सारस्वतवंशावतंसेन प्राच्यमहाविद्यालयसाहित्यदर्शन-
शास्त्राध्यापकेन स्यालकोटवास्तव्य-जैनन्यायविशारद
कवितार्किक—नृसिंहदेवशास्त्रिणा दर्शनाचार्येण
विरचितयाऽतिसरलया स्वोपज्ञ "सौभाग्यवती"
विवृत्या सनाथया रत्नप्रभाख्यया व्याख्यया ।

समुद्भासितम्

तदेतत्

"मेहरचन्द लक्ष्मणदास"—अध्यक्ष
संस्कृतपुस्तकालय लाहौर ।

इत्यनेन

सुन्दरमुम्बईसीसकाक्षरैर्मुद्रापितम् ।

सन् १९२९ ई०

प्रथमसंस्करणम् १०००] [मूल्य १)

# द्वित्राः शब्दाः।

अयि ! स्वच्छन्दच्छन्दोज्ञानार्थिनः कवितोदन्तभूमिभावानुभवभव्यमतयः ! सूरयः ! जानन्त्येव श्रीमन्तः यत् वैदिकलौकिकपद्यकाव्यविज्ञानाय छन्दःशास्त्रस्य कियती अपेक्षा वर्त्तते इति। शिक्षाकारोऽप्याह—" छन्दः पादौ तु वेदस्य " इति। तत्र वैदिकलौकिकसर्वसाधारणोपयोगी पिङ्गलाद्याचार्यप्रणीतानि सूत्राणि सन्ति, परं केवलं लौकिकच्छन्दोज्ञानार्थिनां कृते सरलोपायेन यथा आशु बोधः स्यादित्यालोच्य श्रीकेदारभट्टो वृत्तरत्नाकरं नाम छन्दोग्रन्थं प्रणिनाय यदनेकेषां मल्लिनाथप्रभृतीनामपि लौकिककाव्यव्याख्यातॄणां तत्र २ छन्दःपरिचयप्रकाशने उपजीव्यमासीदिति नात्र विवदनीयं कस्यापि। अस्योपरि नारायणभट्टस्यातिविपुला सर्वटीकामूर्धाभिषिक्ता गम्भीरार्था च टीका वर्त्तते अन्या अपि चाऽधुनिकपण्डितवर्यैः प्रणीताः सन्ति, भविष्यन्ति वा तासां गुणदोषविवेचनं नास्माकं कृत्यं, किन्तु सर्वथा छात्रबोधसौकर्याय बद्धपरिकरेण मयाऽपि " रत्नप्रभा " नाम टीका रचिता। याऽतिसरला संक्षिप्ता पूर्णमूलार्थलापनक्षमा वर्त्तते। यद्यपि मूलग्रन्थो लक्ष्यलक्षणरूपः तथापि मया बालव्युत्पत्तिसौकर्यकरणाय प्रायोऽन्यान्यपि उदाहरणानि सङ्गृहीतानि। क्वचिच्च स्वयं रचयित्वा प्रकाशितानि येन छन्दोज्ञानार्थिनो लक्ष्यान्तरेऽपि लक्षणयोजनरीतिं सुस्पष्टमधिगच्छेयुः। विषमस्थलार्थबोधसुकरतायै च अस्या रत्नप्रभायाः " सौभाग्यवतीं " नाम विवृतिमपि च रचयित्वाऽधो योजितवानस्मि, किन्तु महदिदं हर्षस्थानं छात्राणां यत् प्रायः सारदृष्टिमनुरुध्य भाषाटीकाऽपि सहैव निवेशिता। क्वचित् २ प्रश्नाः अपि नियोजिताः, उत्तरसंङ्केतश्च कृतः, अन्ते च सकलप्रश्नकरणरीतिसूत्रं प्राकाशयम्। सेयं भवतामुपकाराय कीदृशी संवृत्ता इति ग्रन्थान्तराणि इमां च सपार्श्वे स्थापयित्वा स्वयं भवन्तस्तोलयन्तु मया नात्र स्वमुखात् किमपि वचनीयम्। यथामति यथाऽवकाशं प्रूफशोधनमप्यकार्षम्, तथापि मनुष्यभावसुलभत्रुटिस्वभावात् यत्र यत्र भवतां क्षतिः प्रतीयेत तत्तच्छोधयन्तु, कृपया माञ्च सूचयन्तु यदहमाग्रिमे संस्करणे तत्सम्यक् विधास्यामीति सानुनयमभ्यर्थयते—

विदुषामनुचरः—

नृसिंहदेवः।

( हंसान्योक्तिः )

अयि ! हंस ! मास्म चैषीः परवाक्येनैव नीरसंयोगम् ।
यावत्स्वयं न मत्या नीरक्षीरीयनिर्णयं तनुषे ?

डा०लक्ष्मणस्वरूप एम.ए.डी.फिल महोदयानां करकमले

# समर्पणम्



अयि ! मान्यवर्य ! सूरे ! सज्जनवृन्दाग्रगण्य ! मेधाविन् !
नैरुक्तरत्न ! विद्वन् ! साधो ! तव कण्ठभूषणं भवतु ॥ १ ॥
"रत्नप्रभा" मदीया छन्दोविज्ञानकारिणी तरला ।
बालहितैषी पन्था यत्रोद्दिष्टोऽस्ति केवलं सरलः ॥ २ ॥

समर्पकः—

नृसिंहदेवः

# विषयसूची ।



## द्वितीयोऽध्यायः ।



## तृतीयोऽध्यायः—

५ दिसंबर १९८२ ई० को देवगोपाल ने



# ❀ वृत्तरत्नाकरम् ❀

## (रत्नप्रभाटीकोपेतम्)

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १ ॥
वेदार्थशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखबुद्धये ॥ ३ ॥

### ❀ रत्न-प्रभा ❀

यच्चिन्तनेन निखिलं दुरितं विनाशं
सद्यः प्रयाति तमहं हृदि भावयामि ।
श्रीशैलराजदुहितुस्तनयं धुनानं
दानागतभ्रमरभूषितगण्डपालिम् ॥ १ ॥

पतिं पतीनां परमं परेशं धर्मावहं पापनुदं भगेशम् ।
यत्कारणं कारणकारणानां देवं तमीडेऽखिलभूतभूतिम् ॥ २ ॥
पिङ्गलादीन् पुराचार्यान् मातरं पितरं गुरुम् ।
प्रणम्य प्राञ्जलिर्भूत्वा स्मारं स्मारं शिवं तथा ।
वृत्तरत्नाकरस्याऽद्य तन्वे रत्नप्रभामहम् ॥ ३ ॥
इमां टीकां पराश्चापि च्छन्दोज्ञानार्थिनो मुदा ।
सम्भाल्य पार्श्वयोर्नूनं स्वयं सन्तोल्य मेधया ॥ ४ ॥
पण्डिताश्चापि पश्यन्तु बालानां यत्कृते हितम् ।
तदुपादाय गृह्णन्तु नाहं स्तौमि स्वयं स्वकम् ॥ ५ ॥
सारभूता च भाषाऽस्याः सहैव विनियोजिता ।
क्षिप्रमेवार्थ-विज्ञान येन स्यात्पठतां सदा ॥ ६ ॥

ग्रन्थादौ निर्विघ्नग्रन्थसमाप्त्यर्थमवश्यं मङ्गलमाचरणीयमिति श्रुतिमूलकः शिष्टाचारः। तं परिपालयन् "केदारभट्ट" आदौ शङ्करनमस्कारात्मकं मङ्गलमातनोति—'सुखसन्ताने'ति। ब्रह्मा = हिरण्यगर्भः परमेष्ठी * आदिविद्वान्। अच्युतः = विष्णुः ब्रह्मा च अच्युतश्च ब्रह्माच्युतौ ताभ्यामर्चितम् = पूजितम्, गौरीविनायकोपेतम् = गौरी च विनायकश्च गौरीविनायकौ ताभ्याम् उपेतं सहितम्, लोकस्य जगतो भक्तलोकस्य वा शङ्करम् = सुखकर्त्तारम् "सुखसन्तानसिद्धयर्थम्" = सुखं शास्त्रार्थविषयकबुद्धिप्रसादजनितःप्रमोदविशेषः तस्य सन्तानः = परम्परा अविच्छिन्नप्रवाहः, तस्य सिद्धिः लाभःप्राप्तिरिति यावत् तदर्थं नत्वा=प्रह्वीभूय। यत्तु-"सुखमात्यन्तिकं मोक्षलक्षणम्, सन्तानः=पुत्रपौत्रादिः सिद्धयोऽणिमादयस्तदर्थं नत्वा इतिव्याख्यातं तद्भ्रमसात् प्रकृतविषयानुपयुक्तेः। परम्परया तत्प्रयोजनान्वाख्यानेऽपि मुख्य एव कार्यसम्प्रत्ययात्। "तेन केदारेण वृत्तरत्नाकरं नाम छन्दः क्रियत" इति परेणान्वयः। कीदृशः केदारः इत्याकाङ्क्षां तदीयनामजातीष्टदेवतादिनिर्देशपूर्वकं निर्दिशति—वेदार्थेत्यादि। वेदार्थशैवशास्त्रज्ञः= वेदाः ऋगाद्याश्चत्वारोऽनेकशाखात्मकाः तेषामर्थाः कर्मोपासनाज्ञानरूपाः प्रतिपाद्या विषयाः। किंवा वेदस्य अर्थः परमं प्रयोजनं सविलासाज्ञाननिवृत्तिपरानन्दावाप्तिरूपम्, शैवशास्त्राणि शिवोपासनाप्रधानपरकाणि शिवतन्त्राणि यानि उपजीव्य ब्रह्मसूत्रोपर्यपि श्रीकण्ठप्रभृतीनामाचार्याणां भाष्यकरणप्रवृत्तिरभूत् तानि तेषां, जानातीति ज्ञः एवम्भूतः पव्येकः=पव्येकनामा द्विजोत्तमः=वेदविहिताचारनिष्ठो ब्राह्मणः अभूत्=आसीत्। एतेन स्वपितृनाम जातिश्चोक्ता तस्य=पव्येकस्य पुत्रः=तनूजः केदारः=केदारनामा अस्ति। स पुनः कीदृशः—शिवपादार्चनेरतः=शिवचरणसेवापरः शिवोपासक इत्यर्थः। एतेन तेन स्वेष्टदेवतोक्ता।

स्वग्रन्थरचनप्रयोजनं स्पष्टीकुर्वन् तादृशेतरग्रन्थेभ्योऽस्योत्तमतां वक्ति—"तेन" इति। तेन=केदारेण छन्दः=वर्णमात्रादिच्छन्दः—प्रतिपादको ग्रन्थ इत्यर्थः। कथंभूतं तत्—लक्ष्यलक्षणसंयुतम्=लक्ष्यञ्च लक्षणञ्च लक्ष्यलक्षणे सूत्रोदाहरणे ताभ्यां संयुतं समुपेतम् एकत्रैव

---

(सौभाग्यावती विवृतिः)

अथ जयतु विवृतिरेषा सौभाग्यवती यमधिकतत्त्वार्था।
गूढा साध्वी सरला शोभनवर्णा सुवृत्तनिर्देशा॥

* सर्गादौ यस्य हृदि भगवता महेश्वरेण वेदाः प्रकाशिताः। "यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्वेताश्वतर (अ० ६ मं० १८) श्रुतेः।

पद्यतदंशे लक्ष्यलक्षणयोर्दर्शितत्वात् । पिङ्गलसूत्रादिभ्योऽस्य बालानां कृते महद्वैशिष्ट्यमिति भावः । किं नाम छन्द इत्याह—+ वृत्तरत्नाकरं नाम=वृत्तानि श्रीप्रभृतीन्येव रत्नानि तेषामाकरः खनिरूपः समूहो यत्र तत् "वृत्तरत्नाकरम्" इत्याख्यं छन्दः इति ग्रन्थविशेष इत्यर्थः । कस्मै प्रयोजनाय बालानां सुखबुद्धये=अधीतव्याकरणा अनधीतच्छन्दःशास्त्राः प्रकृते बालाः तेषां सुखेन अनायासेन बुद्धये बोधाय एकत्रैव यथा ते लक्ष्यं लक्षणं च अनायासेन बुध्येरन् तथा मया "वृत्तरत्नाकरं" नाम छन्दः क्रियत इत्यर्थः ।

+ अत्र उक्तो बालोऽधिकारी । छन्दोबोधः प्रयोजनम् । छन्दःप्रतिपादनं विषयः । विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इत्य*नुबन्धचतुष्टयं ज्ञेयम् ॥ १, २, ३ ॥

**भाषा**—ब्रह्मा तथा विष्णु से पूजित, पार्वती, गणेश द्वारा सेवित, सकल संसार के सुखकारक=भक्तजनों के कल्याणकारी श्रीशङ्कर महादेव को प्रणाम करके सुखसन्तान=सुखपरम्परा की प्राप्ति के लिये—"केदारभट्ट विद्वान् **वृत्तरत्नाकर** नामक छन्दोग्रन्थ का निर्माण करता है" यह तृतीय श्लोक के साथ अन्वय जान लेना ) ॥१ ॥ वेदार्थ और शैव शास्त्र के तत्त्व का ज्ञाता "पव्येक" नामक एक श्रेष्ठ=वेदविहित आचरणवाला उत्तम ब्राह्मण था, उस पव्येक का पुत्र शिव=शङ्कर महादेव के चरणों का भक्त "केदार" नामक ब्राह्मण है ॥२॥ वही केदार अर्थात् मैं ग्रन्थकर्त्ता बालकों के सुखबोधार्थ † लक्ष्यलक्षणस्वरूप वृत्त=छन्दोरूप रत्नों के समुद्रस्थानी "वृत्तरत्नाकर" नामक छन्दोग्रन्थ का निर्माण करता हूं ।

**+पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।**
**मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥**

सामान्यतः कृतां ग्रन्थप्रतिज्ञां पूर्वाचार्योक्तिसन्मूलतया द्रढयन् विशेषतोऽस्य प्रतिपाद्यविषयं प्रतिजानीते—पिङ्गलादिभिरिति । पिङ्गलादिभिः=सूत्रभाष्यकारादिभि; आचार्यैः=छन्दःशास्त्रप्रणेतृभिः महापुरुषैः यत्=+मात्रावर्णविभेदेन=इदमार्यादि मात्रा छन्दः, इदं श्रीप्रभृति-

---

* ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धसामान्यलक्षणम् ।

**प्र०+**—"वृत्तरत्नाकर" इति ग्रन्थनाम्नि किं बीजम् ? कोऽस्याधिकारी, कश्चास्य प्रतिपाद्यो विषयः । पिङ्गलादिसूत्रेभ्योऽस्य किं वैशिष्ट्यम् ? कतिविधोऽनुबन्धः ? अनुबन्धस्य किं सामान्यलक्षणम् ? वृत्तरत्नाकरकर्त्तुः किं नाम ? कोऽस्याभिजनः ? अस्येष्टदेवता च का? किमर्था चास्य ग्रन्थनिर्माणे प्रवृत्तिः ? (उ०) अस्य पृ० ३ पं०१, ८ आदि ।

† जिस में लक्ष्य=उदाहरण और लक्षण दोनों का स्वरूप ज्ञात होजाय ऐसे "वृत्तरत्नाकर" का ।

**प्र०+**—छन्दः पिङ्गलादिभिराचार्यैः कतिविधं छन्द उक्तम् ।

( उ० ) अस्य पृ० ३ पं० २१

× कस्यचिद् ग्रन्थस्य पाठसंख्याऽनुष्टुब्रात्मकै द्वात्रिंशद्वर्णैर्गण्यते, इति पाठगणनायां सांप्रदायिको नियमः।





वर्णच्छन्द इति विशेषेण द्विधा=द्विप्रकारम् उक्तम्=कथितम् तत् छन्दः इह=ग्रन्थे कथ्यते=निरूप्यत इत्यर्थः। केचित्—

"आदौ तावद्गणच्छन्दो मात्राच्छन्द स्ततः परम्।
तृतीयमक्षरच्छन्दः छन्दस्त्रेधा तु लौकिकम्"॥

इत्याहुः। तत्र गणच्छन्द आर्यादि। मात्राच्छन्दो वैतालीयादि। अक्षरच्छन्दः सामान्यादीति विभागो ज्ञेयः॥ ४॥

**भाषा**—छन्दःसूत्र, भाष्य के प्रणेता पिङ्गलादि आचार्यों ने जो मात्रा, वर्ण भेद से दो प्रकार का छन्द कथन किया है इस ग्रन्थ में उस का वर्णन किया जाता है।

+ **षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम्।**
**प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम्॥ ५॥**

स्वग्रन्थपरिमाणमाचष्टे—षडध्यायेति। षडध्यायनिबद्धस्य=षट् च तेऽध्यायाः षडध्यायाः तैर्निबद्धस्य रचितस्य अस्य छन्दसः=छन्दोग्रन्थस्यास्य वृत्तरत्नाकराभिधस्य परिस्फुटम्=अतिप्रकटम्, षट्त्रिंशदधिकं शतम्=षट्त्रिंशत्सङ्ख्याधिकं द्वात्रिंशदक्षराणामनुष्टुप्छन्दसामेकशतम् १३६ प्रमाणम्=परिमाणं पाठरूपं अपि=निश्चितं विज्ञेयम्=अवगन्तव्यम्।

अयं भावः। यदा कस्यचिद् ग्रन्थस्य पाठगणना चिकीर्षिता भवति तदा द्वात्रिंशदक्षराणामनुष्टुप्छन्दसां श्लोकानां परिगणनया सा शान्ति नीयते इति सम्प्रदायः। एवमस्य पाठगणना १३६ श्लोकवती ज्ञेया। अनेनात्यल्पपाठवतोऽस्य ग्रन्थस्य कण्ठस्थकरणेन सकलवृत्तज्ञानं भविष्यति अतोऽन्यबहुपाठवद्ग्रन्थपठनप्रयासो व्यर्थ इति सूचितम्॥ ५॥

**भाषा**—इस छः अध्यायोंवाले वृत्तरत्नाकर ग्रन्थ का सम्पूर्ण पाठ १३६ श्लोक जानना।

+ **म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।**
**समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥ ६॥**

सकलशास्त्रव्यापिनोऽत्र विशेषोपयोगवतो मादीन् गणानाह—म्यरस्तेति। म्यरस्तजभ्नगैः=मगण–यगण–रगण–सगण–तगण–जगण–भगण–नगण–गुरुभिः, लान्तैः=ल् लघुरन्ते येषां तादृशैर्लघुयुक्तैः एभिः दशभिः अक्षरैः=गणाष्टकगुरुलघुरूपैर्वर्णैः विष्णुना=हरिणा त्रैलोक्यं=

प्र०+—कियान् पाठोऽस्य ग्रन्थस्य? ×पाठगणनायां कीदृशः साम्प्रदायिको नियमः। (उ०) अस्य पृ० ४ पं० ६

प्र०+—कैर्गणैः किमिव किं व्याप्तम्? । (उ०) अस्य पृ० ४ पं० २५

त्रिभुवनमिव व्याप्तम्=अधिष्ठितम् । यथा सकलं स्वकार्यभूतं प्रपञ्चं विष्णुर्व्याप्नोति अर्थात् विष्णुसत्तातोऽतिरिक्तसत्ता नास्ति त्रैलोक्यस्य (जगतः) एवमेव दर्शितगणाक्षरान्तःपात्येव सकलं शास्त्रमिति-ध्येयम् ॥ ६ ॥

भाषा—जिस प्रकार विष्णु से त्रिलोकी व्याप्त है वैसे ही गुरुलघुसहित मगणादि आठ वर्णात्मक गणों से सकल शास्त्र व्याप्त है अर्थात् सब शास्त्र इन्हीं का प्रपञ्च है ।

+सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥७॥

मादिगणान् लक्षयति—*सर्वेति । सर्वगुः=सर्वगुरुः मः=मगणः । मुखान्तलौ=मुखे आदौ अन्तर्मध्ये लौघलुर्ययोस्तौ यरौ=यगणरगणौ भवत इति शेषः । अन्तगलौ=अन्ते गलौ गुरुलघू ययोस्तौ क्रमेण सतौ=सगणतगणौ इत्यर्थः । ग्मध्याद्यौ=ग् गुरुर्मध्यः आद्यश्च ययोस्तौ क्रमेण ज्भौ=जगणभगणौ स्याताम् । त्रिलः=त्रिलघुः नः=नगणः (एवंरूपाः) अत्र=छन्दःशास्त्रे त्रिकाः=त्र्यवयवाः त्र्यक्षरा इत्यर्थः अष्टौ-गणाः भवन्ति । अथैतेषां प्रस्तारादिषूपयोगिनमाकारं प्रदर्शयामः—तत्र

गुरुः ऽ
लघुः ।

| मः | यः | रः | सः | तः | जः | भः | नः |
|---|---|---|---|---|---|---|---|
| SSS | ।SS | S।S | ।।S | SS। | ।S। | S।। | ।।। |

एतेषां देवताफलस्वरूपाणि ग्रन्थान्ते व्याख्यापरिशिष्टे द्रष्टव्यानि॥७॥

+ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥

अथमात्राच्छन्दोगणानाह—ज्ञेया इति । अत्र आर्यादिषु= मात्राच्छन्दःसु चतुष्कलाः=चतुर्मात्रिकाः चतुर्लघूपेताः=चतुर्भिर्लघुभिः सहिताः संस्थिताः=प्रस्तारादिरीत्या सम्यक् वर्त्तमानाः पञ्च=गणाः

---

* छन्दोमञ्जर्यामप्येवमुक्तम्—

मस्त्रिगुरुस्त्रिलघुश्चनकारोभादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतोरलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
गुरुरेको गकारस्तु लकारो लघुरेककः ।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥ इति

प्र०+—कति वर्णगणाः तेषां लक्षणमाकारञ्च लिख ? (उ०) अस्य पृ०५ पं०७

प्र०+—आर्यादिमात्राच्छन्दःसु कति गणाः भवन्ति ? किमाकाराश्च ते । (उ०) अस्य पृ० ५ पं० २१, परपृष्ठेऽपि पश्यत ।

ज्ञेयाः। केते इत्याह—सर्वान्तमध्यादिगुरवः। सर्वत्र अन्तर्मध्ये आदौ च गुरुर्येषां ते तादृशा इत्यर्थः। तत्र चतुर्मात्रिकत्वात् सर्वगुरुरितिपदेन द्विगुरुर्लभ्यते इति ध्यातव्यम्। यथा—

| सर्वगुरुः | अन्तगुरुः | मध्यगुरुः | आदिगुरुः | चतुर्लघुः |
|---|---|---|---|---|
| ऽऽ | ॥ऽ | ।ऽ। | ऽ॥ | ।।।। ॥८॥ |

**भाषा**—आर्यादि मात्रिक छन्दों में चतुर्मात्रिक (चारमात्रावाले) पांच गण होते हैं अर्थात् एक सर्वगुरु ऽऽ, दूसरा अन्त्यगुरु ॥ऽ, तीसरा मध्यगुरु ।ऽ।, चौथा आदि गुरु ऽ॥, और पांचवा चतुर्लघुरूप ।।।।

**सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।**
**वा पादान्ते त्वसौ, ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजु ॥९॥**

लक्षिताः गणाः, सम्प्रति गुरुलघुस्वरूपमुच्यते—सानुस्वार इति सानुस्वारः=अनुस्वारेण सह वर्त्तत इति, अनुस्वारयुक्तः विसर्गान्तः=विसर्गो विसर्जनीयोऽन्ते यस्य सः दीर्घः=दीर्घसञ्ज्ञकः यश्च युक्तपरः=युक्तः संयोगी परोयस्य सः, संयोगे परवर्त्तिनि यः पूर्वो लघुः सोऽपि गुरुरेव मन्तव्यः। तत्र—सानुस्वारो यथा—कं खं इत्यादिः। विसर्गान्तो यथा—अः कः इत्यादिः। दीर्घो यथा—ऊकार इत्यादिः, दीर्घपदं प्लुतस्याप्युपलक्षणम्। युक्तपरो यथा—विष्णुः इत्यादौ संयुक्तष्णुवर्णपरकत्वात् "वि" शब्दो गुरुः। किञ्च—असौ लघुः पादान्ते=श्लोकचरणान्ते वा=विकल्पेन गुरुर्ज्ञेयः। यथेष्टं * लघुगुरुकार्यकृद्भवतीत्यर्थः। अपि च—प्रस्तार्यमाणे असौ ग्=गुरुः वक्रः=कुटिलरेखाकृतिः (ऽ) ज्ञेयः। अन्यः=गुरुभिन्नः ल्=लघुः मात्रिकः=एकमात्रिकः ऋजुः=सरलरेखाकृतिः (।) ज्ञेयः। एतेन गुरोर्द्विमात्रत्वमुक्तं भवति ॥९

**भाषा**—अनुस्वारयुक्त, अन्त में विसर्गवाला, दीर्घ और जिसके परे विसर्ग

* व्यवस्थितश्चायं विकल्पः। तेन—"अथ वासवस्य वचनेन" इत्यादौ उद्गतादिपादान्तस्य लघुतैव। "तस्याः खुरन्यासपवित्रपांसु–" इत्यादौ च गुरुतैव। एतेन प्रथमतृतीयपादान्ते लघुर्न गुरुकृत्यं करोति, कुर्वदपि न हृद्यमिति वदन्तः केचन परास्ताः। "युक्तपरश्च" इति व्यञ्जनोपध्मानीयजिह्वामूलीयपराणामुपलक्षणम्। तथा च—"तनुवाग्विभवोऽपि सन्" "मन्दः कवियशः प्रार्थी" इत्येवमादिषु सकारस्य जिह्वामूलीयोपध्मानीयपक्षे च दकारशकारयोर्गुरुत्वं सिद्धं भवति। इतरथा नकारस्य पादान्तत्वात् सकारस्य न प्राप्नोति, जिह्वामूलीयोपध्मानीययोश्च संयोगत्वाभावाद्दकारशकारयोर्न प्राप्नोति। तदुक्तम्—

"दीर्घं संयोगपरं तथा प्लुतव्यञ्जनान्तमूष्मान्तम्।
सानुस्वारञ्च गुरु क्वचिदवसानेऽपि लघ्वन्त्यम् ॥"

विस्तरस्त्वाकरादिषु द्रष्टव्यः।

हो ऐसा वर्ण 'गुरु'' कहाता है, किञ्च—पाद के अन्त में विद्यमान लघु वर्ण विकल्प से गुरुसञ्ज्ञक जानना । प्रस्तार में गुरु का आकार=चिह्न वक्र ( ऽ ) और लघु का ऋजु= सरल ( । ) है । सार यह कि दो मात्रावाला गुरु और एकमात्रावाला लघु होता है ।

+पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।

पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥ १० ॥

संयोगपरस्य गुरोः क्वचिदपवादमाह—पादादाविति । इह= छन्दःशास्त्रे पादादौ=चरणादौ वर्णस्य=अक्षरस्य संयोगः="हलोऽनन्तरः संयोगः" (१।१।७) इति पाणिनिसूत्रविहितः अन्यवर्णेन संयोगः क्रमसञ्ज्ञकः=एतन्नामा आचार्यैरुक्त इति शेषः । तेन=पादादिसंयोगेन पुरःस्थितेन=अग्रेवर्त्तिना क्वचित्=अपेक्षितविषये गुरोः=गुरुसञ्ज्ञकस्यापि वर्णस्य लघुता=लघुत्वमिष्टमिति शेषः ॥१०॥

+तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि

अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥

उक्तमर्थमुदाहरणेन स्पष्टीकरोति—तरुणमिति । काचित् ग्राम्यनागरवरयोर्ग्राम्ये वरे साभिलाषाऽऽसीत्, तां निन्दागर्भस्तुत्या चतुरतरा आली ततो निवारयति—तरुणम् इति । हे ! सुन्दरि !=दर्शनादेव तरुणमनोहारिणि ! ग्राम्यजनः=ग्रामीणो जनः अल्पव्ययेन= स्तोकद्रव्यव्ययकरणेन मधुरम्=हृद्यं मिष्टम्=स्वादु भोज्यम् अश्नाति= भुंक्ते । किन्तत् इत्यपेक्षायामाह—तरुणम्=सद्यस्कं कोमलं सर्षपशाकम्=सर्षपाणां शाकम् नवौदनम्=नवानां तण्डुलानामोदनं भक्तम् पिच्छलानि दधीनि च=तथा घनीभूतानि सान्तानिकोपेतानि फेनिलानीत्यर्थः दधीनि । अल्पधनो मिष्टाभासभोजी ग्राम्यजनो विदग्धो न भवतीति एनं परिहर, नागरं विविधरतिरसाभिज्ञं वृणिवति व्यङ्ग्यम् । ग्रामीणेऽभिलाषं माकार्षीरिति भावः ॥११॥

**भाषा**—पाद के आदि में विद्यमान एक वर्ण का अन्य वर्ण के साथ जो संयोग, उसको इस शास्त्र में आचार्य-लोक क्रमसञ्ज्ञक=" क्रम " नाम से कथन करते हैं इस " क्रम " नामक वर्णसंयोग के परे होने पर किसी स्थल में पूर्ववर्त्ती गुरु भी लघु हो जाता है । अर्थात् ऐसे गुरु वर्ण से जहां इष्टसिद्धि न हो वहां उस गुरु को भी लघु ही मान लिया जाता है । परन्तु यह लघुभाव संयोगनिमित्तक गुरु का ही जानना दीर्घादि का नहीं ।

अत्र द्वादशमात्रानियमवति आर्यापद्ये प्रथमपादे "सुन्दरि"

---

प्र०+—क्रमसञ्ज्ञकस्य संयोगस्य किं लक्षणं ? कुत्र चास्योपयोगः, लघोर्गुरुभावे गुरोश्च लघुभावे कीदृशः सिद्धान्त इति सोदाहरणं [illegible] ? (२०) अस्य पृ० ७ पं० ४, १२

इति सम्बुद्धिपदं "ग्रा" इति संयोगपरत्वाद् गुरु, परन्तु अस्य गुरुत्वे सति त्रयोदशमात्रा स्युः, इष्यन्ते तु द्वादशमात्रा एव, अतः प्रयोजनवशाद् गुरोरप्यस्य लघुभाव इष्टः। क्वचिदिति कथनेन व्यवस्थितविकल्पोऽयं गुरोर्लघुभाव इति बोधितम्। तत्फलन्तु—

" गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात्॥"

इत्यत्र प्रतिपत्तिशब्दे "प्र" इति क्रमसञ्ज्ञे संयोगे पुरःस्थितेऽपि रूपशब्दीयपकारस्य गुरुत्वमेव नात्र लघुत्वं दर्शितापेक्षाया अभावात्। एवमेवान्यत्रापि ज्ञेयम्। वस्तुतस्तु—" प्रहेवा " इति पिङ्गलसूत्रस्यैवायं सर्वः प्रपञ्चः। तत्र*"प्रह्" शब्दयोरुपलक्षणत्वात् सर्वहलां संयोगस्य पादान्तस्थस्य अपादान्तस्थस्यापि कविप्रयोगेषु व्यवस्थितविभाषया लघुताया इष्टत्वात्। प्रपञ्चितश्चायमर्थो विस्तरेण रामेश्वरसूनुना नारायणभट्टेन वृत्तरत्नाकरटीकायाम्। अस्माभिस्तु-पाठगौरवभिया सिद्धान्त एव प्रदर्शित इत्यलम्॥११॥

+अब्धिभूतरसादीनां ज्ञेया संज्ञाऽत्र लोकतः।
ज्ञेयः पादश्चतुर्थोंऽशो यतिर्विच्छेदसंज्ञिका॥ १२॥

अथात्र शास्त्रे अन्या अप्यपेक्षिताः परिभाषा उच्यन्ते। अब्धिभूतेति। अब्धयः=सागराः चत्वारः। भूतानि=पृथिव्यादीनि पञ्च। रसाः=मधुराद्याः षट् आदिशब्दात् अश्वाः मुनयश्च सप्त, वसवो नागाश्चाष्टौ, ग्रहाः नव, दिशोदश, रुद्रा एकादश, आदित्या द्वादश

---

* यथा च **कुमारसम्भवे**—

सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे॥

इत्यत्र प्रशब्दे परे गुरोर्लघुत्वम्। यथा वा **माघे**—

प्राप्तनाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय।
औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम्॥

अत्र ह्रशब्दे परे गुरोर्लघुत्वम्। एवमेव क्वचित् २ पादान्तलघोरपि गुरुभाव आकाङ्क्ष्यते। यथा—( पारिजातहरणनाटके )

सिन्दूरपूरकृतगौरपरागशोभे शश्वन्मदस्रवणनिर्झरवारिपूरे।
संग्रामभूमिगतमत्तसुरेभकुम्भ-कूटे मदीयनखराशनयो विशन्तु॥

अत्र तृतीयचतुर्थपादान्तलघ्वोर्गुरुत्वम्॥

**प्र०+**—पादस्य यतेश्च लक्षणं ब्रूहि? उदाहरणे च दर्शय अब्ध्यादिपदैरिह शास्त्रे कीदृशाः सङ्केता गृह्यन्ते? (उ० क०) परी० पृ० द० प० १५

इत्येवमादि ग्राह्यम्। अब्ध्यादिशब्दाः स्वपर्यायसहिता ग्राह्याः, तेन सागरसमुद्रादिशब्दैरपि चतुरादिसङ्ख्याग्रहो ज्ञेयः इत्येवमाह एतेषां "लोकतः संज्ञा ज्ञेया" इति।

लोकतः=ज्यौतिषादिशास्त्रान्तरव्यवहारादित्यर्थः। पादः चतुर्थोऽशो ज्ञेयः। विच्छेदसंज्ञिता यतिर्ज्ञेया। विच्छेदो=विरामः। अधिकन्तु यतिविषये मत्प्रणीतायां काव्यादर्शटीकायां "कुसुमप्रतिमायां" निरीक्ष्यम्।

भाषार्थ—ज्योतिषादि शास्त्रों में अब्धि=समुद्र पद से चार ४ सङ्ख्या का ग्रहण है। एवं जो भूत ५, रस ६, अश्व, मुनि ७, वसु, नाग ८, ग्रह ९, दिशा १०, रुद्र ११, आदित्य १२ इत्यादि संकेत किया है वह सब यहां भी जानलेना और पद्य=श्लोक के चतुर्थ भाग का नाम "पाद" तथा विच्छेद=विराम को "यति" कहते हैं।

+युक्समं विषमं चायुक्स्थानं सद्भिर्निगद्यते।
सममर्द्धसमं वृत्तं विषमं च तथा परम्॥ १३॥

सद्भिः=छन्दोविद्भिः समं=द्वितीयचतुर्थादि स्थानं "युक्" इति, विषमं स्थानम्=एकतृतीयादि "अयुक्" इति निगद्यते=कथ्यते। "च" पदेन समस्य युग्मानोजसंज्ञे, विषमस्य अयुग्मौजसंज्ञे च दर्शिते। अथ वृत्तभेदानाह—'समम्' इति। स्पष्टम्। इदन्तु बोध्यम्—पादाख्यैः पदैर्घटितं पद्यम्। सामान्यतस्तत् द्विविधम्। जातिर्वृत्तञ्च। जातिर्नियतमात्रिका। वृत्तं नियतगुरुलघुविन्यासम्। तत्र जातिरार्यादि। वृत्तम् उक्ताऽत्युक्तादि। तच्च समादिभेदवत्। तदुक्तम्।

पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्॥ इति (छन्दोमञ्जरी) ॥१३॥

भाषा—छन्दःशास्त्रादि के ज्ञाता पण्डितों ने द्वितीय, चतुर्थादि स्थान को "सम" और एक, तृतीयादि स्थान का नाम "विषम" कहा है। इसीप्रकार युग्म, अनोज शब्द से "सम" तथा अयुग्म ओज शब्द से "विषम" स्थान का ग्रहण जानना।

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते॥ १४॥

अथसमवृत्तलक्षणमाह—अङ्घ्रय इति। यस्य वृत्तस्य चत्वारः अङ्घ्रयः=पादाः तुल्यलक्षणलक्षिताः=समानलक्षणोपेताः सन्तीति शेषः छन्दःशास्त्रतत्त्वज्ञाः=छन्दोरहस्यविदः तत्=छन्दः समम्=समसञ्ज्ञकं वृत्तं प्रचक्षते=कथयन्ति॥ १४॥

प्र०+समादिस्थानानां लक्षण ... इति ... दर्शयति (स०) अस्य पृ०९ पं०१३,१४

भाषा०—जिस श्लोक के चारों पाद समान लक्षण से युक्त हों उसका नाम "समवृत्त" है।

**प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।**
**द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५ ॥**

अर्धसमलक्षणमाह—"प्रथमाङ्घ्रिसम" इति। यस्य=वृत्तस्य तृतीयः चरणः=पादः प्रथमाङ्घ्रिसमः=प्रथमपादतुल्यो भवेत् द्वितीयः= द्वितीयः पादः तुर्यवत्=चतुर्थचरणवत् च भवेत् तत् "अर्धसमं" नाम वृत्तम्=छन्दः उच्यते=कथ्यते ॥ १५ ॥

भाषा०—जिस श्लोक का तृतीयपाद प्रथमपाद के सदृश और चतुर्थपाद द्वितीय के सदृश हो उसको "अर्धसम" कहते हैं।

**+यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्।**
**तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥**

विषमवृत्तलक्षणमाह—यस्येति। यस्य=वृत्तस्य पादचतुष्के अपि= चतुर्ष्वपि पादेषु परस्परम्=अन्योन्यं लक्ष्म=लक्षणं भिन्नम्=विलक्षणं २ स्यादिति शेषः, छन्दःशास्त्रविशारदाः=छन्दःशास्त्रविचक्षणाः तत् "विषमम्" नाम वृत्तम्=पद्यम् आहुः=कथयन्ति। एतेषामुदाहरणानि अग्रे ४र्थे ५मे चाध्याये दर्शयिष्यन्ते ॥ १६ ॥

भाषा०—जिस श्लोक के चारों पादों में भिन्न २ लक्षण पाया जाय उसका नाम "विषम वृत्त" है, ऐसा छन्दःशास्त्र के ज्ञाता कहते हैं।

**+आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः।**
**पृथक्छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतम् ॥ १७ ॥**

अथ समवृत्तभेदा उच्यन्ते—आरभ्येति। एकाक्षरात्=एकवर्णात् पादात्=पद्यतुरीयचरणात् आरभ्य=आदौ कृत्वा एकैकाक्षरवर्धितैः= एकेन एकेन अक्षरेण वर्धितैः वृद्धिं गमितैः पादैः कृत्वा षड्विंशतिम्=षड्विंशतिवर्णसंख्याकं पादं प्रति यावत् गतम्=गमनं प्राप्तं भवेत् अर्थात् यावत् षड्विंशतिवर्णैरेकः पादः पूर्येत तावत्पर्यन्तं पृथक्=भिन्नं भिन्नं छन्दः=वृत्तम् उक्तादिनामकं भवेत्। षड्विंशत्यक्षरपर्यन्तं वृद्धेरवधिरित्यर्थः। एवं सन्ति उक्ताख्यायां प्रथमायां जातौ चत्वारोऽपि पादा एकैकाक्षराः सन्तीत्यादि ज्ञेयम् ॥ १७ ॥

---

प्र०+—समादिवृत्तानां लक्षणं सोदाहरणं प्रपञ्चय? (उ०) पृ० ९, १० पं० १

प्र०—कियत्सङ्ख्याकाक्षरपर्यन्तं समवृत्तभेदाः?। "आरभ्यैकाक्षरात्पादात्" इत्यस्य श्लोकस्य व्याख्यां विधेहि? (उ०) अत्र पृ० १० पं० २०

भाषा०—एक अक्षरवाली "उक्ता" जाति से लेकर एक एक अक्षर के वृद्ध करने से २६ अक्षरों द्वारा जिस "उत्कृति" नामक जाति का एक पाद होता है तावत्पर्यन्त भिन्न २ जातिवाले वर्णात्मक छन्द होते हैं (यह सब समवृत्त के भेद जानने चाहिये)

+तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः
शेषं गाथा-स्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥१८॥

अधिकाक्षरपादस्य छन्दसः सञ्ज्ञोच्यते—"तदूर्ध्वम्" इति । तदूर्ध्वम्=षड्विंशत्यक्षरादूर्ध्वम् उपरि सप्तविंशत्याद्यक्षरपादं छन्दः चण्डवृष्ट्यादिदण्डकाः=एतन्नामानः परिकीर्त्तिताः=कथिताः। शेषम्=चण्डवृष्ट्यादिविशेषात् अन्यत् त्रिभिः षड्भिः वा चरणैः=पादैः उपलक्षिताः गाथाः=गाथासञ्ज्ञकानि छन्दांसि ज्ञेयानीत्यर्थः । चकारान्न्यूनाधिकगुरुलघुचरणसत्वेऽपि गाथाव्यवहार एव सूचितः "गाथा त्रिभि"रिति—"लक्षिता" इति च पाठान्तरम् ।

भाषा०—२६ अक्षरवाली जाति से अतिरिक्त २७ आदि अक्षरों के पादवाले छन्द "चण्डवृष्टि" आदि दण्डक नाम से कहाते हैं । इन से भिन्न ३ वा ६ चरणवाले सब छन्दों का नाम "गाथा" है । "च" शब्द के निवेश से विलक्षण २ गुरु लघु वर्णों के विन्यासवाले न्यूनाधिक पाद से युक्त होने पर भी गाथा ही जाननी चाहिये । सार यह कि गाथा छन्दों में गुरु लघु वर्णों का क्रम तथा पादों की संख्या एकान्त=नियत नहीं ।

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शक्करी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ २० ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि तथातिकृतिरुत्कृतिः ॥ २१ ॥
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥

एकाक्षरमारभ्य षड्विंशत्यक्षरपर्यन्तं वर्धितपादानां छन्दसां उक्तादिजातिसंज्ञा निर्दिशति—उक्तेत्यादिना (१) उक्ता । (२) अत्युक्ता । (३) मध्या । (४) प्रतिष्ठा । अन्या सुपूर्विका प्रतिष्ठा अर्थात् (५) सुप्रतिष्ठा । (६) गायत्री । (७) उष्णिक् । (८) अनुष्टुप् ।

---

प्र०+—गाथालक्षणं निरूप्य चण्डवृष्ट्यादीनां ततो भेदं ब्रूहि ? (उ०) अस्य

पृ० ११ पं० ४

(९) बृहती। (१०) पङ्क्तिः। (११) त्रिष्टुप्। (१२) जगती। (१३) अतिजगती। (१४) शक्करी। (१५) अतिशक्करी। (१६) अष्टिः। (१७) अत्यष्टिः। (१८) धृतिः। (१९) अतिधृतिः। (२०) कृतिः। (२१) प्रकृतिः। (२२) आकृतिः। (२३) विकृतिः (२४) संकृतिः। (२५) अतिकृतिः। (२६) उत्कृतिः। एता उक्तादिजातिसंज्ञाः। अत्र प्रतिपादमेकैकाक्षरवृद्धौ सकले छन्दसि चतुरक्षरा वृद्धिर्भवति। अर्थात्—उक्ता चतुरक्षरा। अत्युक्ता अष्टाक्षरा। मध्या षोडशाक्षरा एवमुत्तरत्रापि। उत्कृतिश्च चतुरधिकशताक्षरा इति नारायणभट्टः। अध्यायमुपसंहरन्नग्रेतनं वक्तव्यमाह—इतीति। इति=अमुना प्रकारेण छन्दसाम्=वृत्तानां संज्ञाः=नामानि उक्ताः= कथितानि। सम्प्रति=अधुना क्रमशः=क्रमेण मात्रावृत्तानुपूर्वकम्= मात्रावृत्तमारम्भतः कृत्वा सर्ववृत्तानाम्=सर्वेषां छन्दसां लक्षणम्= स्वरूपं सोदाहरणं वच्मि=निरूपयामि अर्थात् प्रथमं मात्रावृत्तं कथ्यते, ततः उद्देशानुसारं वर्णवृत्तमिति ज्ञेयम्।

**भाषार्थः**—उक्त रीति के अनुसार उक्तादि भेद कथन द्वारा वर्णच्छन्दों की जातियों की संज्ञा दर्शाई अर्थात् उक्त जातियों का उद्देश किया है अब वक्ष्यमाण ग्रन्थ से प्रथम मात्रावृत्तों का निरूपण कर के अनन्तर लक्षणादि द्वारा वर्णात्मक छन्दों का निरूपण करता हूं।

इति कवितार्किक-दर्शनाचार्य-**नृसिंहदेव**शास्त्रिणा विरचितायां **रत्नप्रभाख्यायां** वृत्तरत्नाकरव्याख्यायां प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः।

## (अथार्याप्रकरणम्)

१ २ ३ ४ ५ ६ज० ७ गु०
—S S—S S— I I S— S S—S I I—I SI— I I S— S
लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः।
१ २ ३ ४ ५ ल० ७ गु०
—S S—S I I—S S I I S—S I I I—S S— S—
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥

१ २ ३ ४ ५ ६ ७ गु०

–ऽऽ– । ऽ ।–ऽ ।।–ऽ ऽ– ।। ऽ । ।।।।।। ।–ऽ–

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः।

१ २ ३ ४ ५ ल० ७ गु०

– ।। ऽ– ऽ ऽ–।। ऽ –ऽ ऽ– ।। ।।।—ऽ ऽ—ऽ

चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥ २॥

मात्रावृत्तेषु प्रथममार्यालक्षणमाह—"लक्ष्म" इति। आर्यायाः=आर्यानामकमात्रावृत्तस्य प्रथमेऽर्धे=पूर्वार्धे एतत् लक्ष्म=इदं लक्षणम् नियतम्=निश्चितम् "अस्ति" इति शेषः। किन्तदित्यपेक्षायामाह—सप्तेति। सप्त=सप्तसंख्याका गोपेताः=गुरुणा युक्ता गणाः=चातुर्मात्रिकाः पूर्वोक्ता भवन्तीत्यर्थः। इह=अस्यामार्यायाम् विषमे=प्रथमतृतीयपञ्चमसप्तमरूपे जगणः=मध्यगुरुर्गणो न भवति। किन्तु—अयम्=जगणः षष्ठः=षष्ठस्थानको भवति अर्थात् जगणेन षष्ठस्थानकगणपूर्त्तिः कर्त्तव्या, वा=अथवा षष्ठे स्थाने नलघू=नश्च लघुश्चेति द्वन्द्वः अर्थात् नगणः त्रिलघुरूपः एको लघुश्च भवतः॥ १–२॥

**भाषा**—आर्या के पूर्वार्ध का यह लक्षण जानना कि–इस में गुरुसहित सात गण होते हैं, अर्थात् जिन के अन्त में एक गुरु हो ऐसे * सात गण आर्या के पूर्वार्ध का लक्षण है, किन्तु आर्या छन्द में विषम=तृतीयादि स्थान पर कदापि जगण नहीं होता, षष्ठ स्थान में जगण अथवा नगण १ लघु का विकल्प जानना।

षष्ठे=षष्ठस्थानवर्त्तिनि न्ले=नलघुरूपे चतुर्लघुरूपे (।।।।) गणे सति द्वितीयलात्=द्वितीयलघोः प्रारभ्य अर्थात् तस्यैव षष्ठस्य चतुर्लघोर्गणस्य द्वितीयलघोः पूर्वं=प्रथमलघोरन्ते सयतिपदनियमः=यतिविशिष्टस्य पदस्य=सुप्तिङन्तात्मकस्य नियमः=अवसानं समाप्तिरिति यावत् कर्त्तव्य इति शेषः। परके न्ले=षष्ठापेक्षया परस्मिन् सप्तमे नगणलघुरूपे (।।।।) गणे कृते सति मुखलात्=सप्तमस्यैव प्रथमलघोः पूर्वं षष्ठगणान्ते सयतिपदनियमः (इति पुनरन्वेतव्यम्) सयति पदं नियम्यत इत्यर्थः। चरमे=द्वितीये पुनरार्याया अर्धे=उत्तरार्धे पञ्चमके=पञ्चमगणे न्ले=नगणलघ्वात्मके चतुर्लघौ (।।।।) सति तस्मात्=मुखलघोः पूर्वमेव अर्थात् चतुर्थगणस्यान्ते सयतिपदनियमः=चतुर्थान्तमेव पदं समाप्यत इत्यर्थः। इह=आर्याया उत्तरार्धे षष्ठः=गणः लः=लघुरूप (।) एव भवति। एतत् षष्ठगणस्य लघु-

* "ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः" इत्यादि के ८वें श्लोक में कथन किये हुए चातुर्मात्रिक लेने चाहिएँ। त हो उसको पिङ्गल

रूपत्वकरणमेव पूर्वार्धाद्विशेषः। अन्यत्तु सर्वं पूर्वार्धलक्षणमुत्तरार्धे समानमिति भावः। उदाहरणञ्चेदमेव लक्ष्यलक्षणात्मकात्वादस्य ग्रन्थस्येति सर्वत्र ज्ञातव्यम्। उदाहरणान्तरं यथा वा—

* "कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे।
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्या॥
वृन्दावने सलीलं वल्गुद्रुमकाण्ड, निहित,तनुयष्टिः।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः॥" इति। १, २।

**भाषा**—यदि षष्ठ स्थान में नलघु=चतुर्लघुरूप गण हो तो उस गण के द्वितीय लघु से पूर्व=प्रथम गण के अन्त में यति=विराम होता है। परन्तु षष्ठ गण से परे सप्तम गण नलघु=चतुर्लघुरूप हो तो उस के प्रथम लघु के पूर्व अर्थात् षष्ठ गण के अन्त में विराम जानना। द्वितीय अर्ध का ऐसा लक्षण है कि—यदि पञ्चम गण नलघु=चतुर्लघुरूप हो तो पञ्चम गण के पूर्व अर्थात् चतुर्थ गण के अन्त में यति करनी चाहिए। किञ्च—आर्या के उत्तरार्ध में नियम से षष्ठ गण एक लघु=एकमात्रारूप ही होता है चातुर्मात्रिक नहीं होता इतना ही पूर्वार्ध से उत्तरार्ध का विशेष समझें।

१ २ ३ ४ ५ ६ ७ गु०
–S S–। S । - S S–। । S–S S । S ।– S S S

## त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।

१ २ ३ ४ ५ ल० ७ गु०
–S S– । S । S S– S S– S S– ।– S S– S–

## पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम्॥ ३॥

अथार्याभेदान् प्रतिपादयन् प्रथमं पथ्यासञ्ज्ञामार्यां लक्षयति—"त्रिष्वंशकेषु" इति। यस्याः=आर्यायाः दलयोः=द्वयोः पादयोः आद्येषु=प्रथमेषु त्रिषु अंशकेषु=चतुर्मात्रात्मकेषु त्रिषु गणेषु पादः

* आर्या=श्रेष्ठा यशोदा=नन्दपत्नी गोष्ठ्याम्=गोव्रजे इति जगाद=अभाणीत्। इति किम्—वल्लवकुलटाभिः=वल्लवानामित्वरीभिः स्त्रीभिः (सोपहासोक्तिरियम्) आहृतः=आकारितः शिशुः=क्षीरमुखः मे=मम सुतः=पुत्रः कृष्णः क्षणमपि गृहे न वसति=नैव तिष्ठति वल्लवस्त्रीणां विविधक्रीडापरवशस्तत्रैव रमत इति भावः॥ "वृन्दावने" इति। सलीलं यथा स्यात्तथा वल्गुः=मनोहरः पत्रपुष्पादिभिर्हरितभरितो यो द्रुमः=वृक्षः तस्य काण्डे निहिता लम्बिता तनुयष्टिः=अलौकिकसौन्दर्येपितं शरीरं येन सः। स्मेरे=हसिते मुखे अर्पिता दत्ता वेणुः वंशी येन सः एवम्भूतः कृष्णः=सच्चिदानन्दं ब्रह्मैव कृष्णरूपेण लीलया विवर्त्तमानं यदि मनसि वर्त्तते ध्यानगोचरोऽस्ति तदा कः स्वर्गः न कोपि, अर्थात् इन्द्रादिलोकोऽपि तुच्छ ए... सातिशयादिदोषवत्त्वात् श्रीकृष्णध्यानस्य चानन्तफलत्वादितिभावः। कस...

–S S—S

पष्ठोऽयं नल...

दृश्यते कविप्रयोगेषु इति शेषः अर्थात् द्वादशमात्रान्ते पादसमाप्तिरस्ति, छन्दोविद्भिः=छन्दःशास्त्रविज्ञैराचार्यैः तस्याः=आर्यायाः "पथ्या" इति नाम समाख्यातम्। सा पथ्यानामार्याभवतीत्यर्थः। इदन्तु बोध्यम्—यत्र तत्र ऋष्यादिनामनिर्देशः स सर्वोपि स्वकपोलकल्पनावारणार्थः। उदाहरणञ्चेदमेवेति पूर्वमपि इमां रीतिमवोचामैव॥ यथा वा—

"पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।
यदि मनसा वचसा वा द्रुह्यति नित्यं न भूतेभ्यः॥" अथवा—
"जय जय जगदीश विभो! केशव! कंसान्त! माधवानन्त!
कुरु करुणामिति भणितिः पथ्या भवरोगदुःस्थानाम्॥"

अत्र उभयोराद्ययोः पादयोर्द्वादशमात्रान्त एव विरामः॥ ३॥

**भाषा**—छन्दःशास्त्र के प्रणेता आचार्यों का कथन है कि—जिसके दोनों=पूर्वार्ध उत्तरार्ध रूप भागों के प्रथम तीन अंश=द्वादशमात्रारूप तीन गणों के अन्त में पाद की समाप्ति हो उसका नाम "पथ्या" है। "प्रकीर्त्तितं नागराजेन" इति पाठान्तरम्।

१ २ ३ ४ ५ ६ ७ गु०

—ऽ ऽ— । । ऽ—। । ऽ— । ऽ ।—। । ऽ—। ऽ ।—। । ऽ ऽ—

## संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।

१ २ ३ ४ ५ ल० ७ गु०

—ऽ ऽ— ऽ ऽ— । । ऽ—ऽ । ।— ऽ । ।—।— ऽ ऽ ऽ

## यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥ ४॥

**विपुलां लक्षयति**—संलङ्घ्येति। यस्याः=आर्यायाः आदिमं गणत्रयम्=प्रथमान् त्रीन् गणान् संलङ्घ्य=लङ्घयित्वा अर्थात् द्वादशमात्रात्मकमुक्तं विरामस्थानमतीत्य द्वयोः शकलयोः=पूर्वोत्तरार्धरूपयोर्भागयोः पादो भवति, पिङ्गलानागः=अनन्तो भगवान् ताम् "विपुलाम्"=विपुलानाम्नीमार्यां समाख्याति=भणति।
(उदा०) यथा वा—

पुंसां कलिकालव्यालहतानां नास्त्युपहतिरल्पापि।
वीर्यविपुला मुखे चेत् स्याद् गोबिन्दाख्यमन्त्रोक्तिः। इति॥ ४॥

**भाषा०**—जिस आर्या के प्रथम तथा द्वितीय दोनों भागों में द्वादशमात्रात्मक तीन गणों का लङ्घन करके अर्थात् चतुर्थगण में पाद की समाप्ति हो उसको पिङ्गलनाग ने "विपुला" कथन किया है।

१ २ज० ३ ४ज० ५ ६ ७ गु०

–।। S–। S।–S S । S ।–S S–। S।–S S—S–

**उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।**

१ २ज० ३ ४ज० ५ ल० ७ गु०

–।। S–। S ।–S S– । S । S S–।–S S–S–

**चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥**

**चपलां लक्षयति**—उभयार्धयोरिति । **यस्याः=आर्यायाः उभयार्धयोः= द्वयोरर्धयोः द्वितीयतुर्यौ=द्वितीयचतुर्थौ जकारौ=जगणौ गमध्यगौ= गयोर्मध्यगतौ स्यातामिति शेषः तस्याः नागराजेन "चपला" इति**

। S ।

**नाम प्रकीर्त्तितम् । यथाऽत्रैव प्रथमार्धस्य प्रथमपादे धयोर्ज इति जगणः या—का—इति द्वयोर्गुर्वोर्मध्यगतः । एवमेव उत्तरार्धस्य**

। S ।

**प्रथमपादे तिनाम इति जगणः ले–त–इति द्वयोर्गुर्वोर्मध्ये स्थितो वर्त्तते। तकारस्य संयुक्ताद्यत्वाद्गुरुत्वम् । एवमेव द्वयोरर्धयोश्चतुर्थोऽपि जकारो गणो गुरुद्वयमध्यगतो ज्ञातव्यः ॥ ५ ॥**

**भाषा०**—पिङ्गलमुनि का ऐसा कथन है कि–जिस आर्या के दोनों भागों में द्वितीय चतुर्थगण जगण दोनों गुरु वर्णों के मध्यगत हों उसका नाम "चपला" है। उदाहरणान्तरं यथा—

चपला न चेत्कदाचिन्नृणां भवेद्भक्तिभावना कृष्णे ।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥

लक्षणयोजनं पूर्ववत् ।

१ २ज० ३ ४ज० ५ ६ ७ गु०

–S S–। S । S S–। S ।–S । ।–। S ।–S S–S–

**आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।**

१ २ ३ ४ ५ ल० ७ गु०

–S S S । ।–S S– । । । । S S–।–S । । S–

**शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥**

**मुखचपलां लक्षयति**—आद्यमिति । **यस्याः=आर्यायाः आद्यम्= प्रथमम् समस्तम्=सम्पूर्णम् दलम्=भागः चपलागतं लक्ष्म भजेत= चपलाया यदुक्तं लक्षणं तद्युक्तं स्यात् शेष=द्वितीयदले पूर्वजलक्ष्मा=**

आर्यासामान्यलक्षणवती सा=आर्या (आर्याभेद इत्यर्थः) मुनिना=पिङ्गलेन मुखचपला उदिता=मुखचपलानामेति कथिता। (उदा०) यथा वा—

* विपुलाऽभिजातवंशोद्भवापि रूपातिरेकरम्यापि।
निःसार्यते गृहाद्वल्लभापि यदि भवति मुखचपला॥

**भाषा०**—जिस आर्या का पूर्वार्ध चपला के सम्पूर्ण लक्षण से युक्त हो और उत्तरार्ध आर्या के सामान्यलक्षणवाला हो उसको "मुखचपला" कहते हैं॥ ६॥

१ २ ३ ४ ५ ६ ७ गु०

–S । ।–S । । –S S–। । S–। ।S-। S – । । S–S-

+प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः।

१ २ज० ३ ४ज० ५ ल० ७ गु०

–S S–। S। S S–। S।– S S-।-। । । ।–S

लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला॥ ७॥

जघनचपलां लक्षयति—प्रागिति। प्रथमेऽर्धे=प्रथमदले प्राक् प्रतिपादितम्=पूर्वोक्तसामान्यलक्षणम्, प्रथमेतरे=द्वितीयार्धे तु=च चपलायाः लक्ष्म=लक्षणं या आर्या आश्रयेत=भजेत सा विशुद्धधीभिः=छन्दोविवेचनाचार्यैः पिङ्गलादिभिरेव "जघनचपला" उक्ता=कथिता (उदा०) यथा वा—

कृष्णः शृङ्गारपटुर्यौवनमदचपलः सुललिताङ्गः।
आसीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम्॥ (छन्दोमञ्जरी)

अथवा—

यस्याः पादांगुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा।
विपुले कुले प्रसूतापि सा ध्रुवं जघनचपला स्यात्॥ इति।

**भाषा०**—जिस आर्या के प्रथम अर्ध में सामान्यलक्षण हो और द्वितीय अर्ध में चपला का लक्षण पाया जाय उसका नाम "जघनचपला" है। मुखचपला के दोनों भागों को विपरीत स्थापन करने से "जघनचपला" बन जाती है †॥

इत्यार्याप्रकरणम्।

---

* अस्या उभयदले गणत्रयान्ते पादो न विश्राम्यति, पुनः द्वितीयचतुर्थौ जगणौ, प्रथमः सगणः, तृतीयो द्विगुरुः अत इयमुभयविपुलापूर्विका "मुखचपला" नाम आर्या। मुखे आस्ये वाक्चापल्यवती च नारी मुखचपलेत्युच्यते इत्यन्यत्र विस्तरः।

**प्र०+**—आर्यायाः किं सामान्यलक्षणम्? तत्र यतिनियमश्च कीदृशः? संक्षेपतस्तस्याः कति भेदाः? पथ्यादीनां लक्षणमुक्तलक्ष्ये योजनीयम्? (उ०) पृ०१२–तः१७पृ०

†एतदुक्तमभियुक्तैः—**एकैव भवति पथ्या विपुलास्त्रिंशच्च तास्त्रिंशत्। चपलभेदाश्चामीरपि मिश्रा इति षोडशार्याः स्युः॥ (हलायुधवृत्तिः)**

# अथ गीतिप्रकरणम् ।

१ २ ३ ४ ५ ६ज० ७ गु०
–ऽ ऽ–।।। ।—ऽऽ-। । ।।।। ऽ–। ऽ ।–ऽ।। ऽ

**आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।**

१ २ ३ ४ ५ ६ज० ७ गु०
–।।ऽ— ।।।।—ऽ ऽ—ऽ ऽ–ऽ ऽ।ऽ ।–ऽऽ–ऽ–

**दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ ८ ॥**

गीतिलक्षणमाचष्टे—आर्येति । आर्याप्रथमदलोक्तम् = आर्यायाः प्रथमदले * पूर्वार्धे उक्तं=कथितं लक्षणम् यदि कथमपि–केनापि प्रकारेण उभयोर्द्वयोर्दलयोः = भागयोः पूर्वार्धोत्तरार्धयोः स्यात् तर्हि भुजङ्गेशः=पिङ्गलनागः तां गीतिम्=गीतिनामकं छन्दः गीतवान्= कथितवान् । कथंभूताम्—कृतयतिशोभाम् = कृता यत्या विच्छेद-रूपया शोभा श्रवणसौन्दर्यं यस्याः ताम् ।

**भाषा**—यदि आर्या के पूर्वार्ध का लक्षण दोनों भागों में उपलब्ध हो तो यति की शोभा से युक्त उस छन्द को पिङ्गलाचार्य ने "गीति" नाम से कथन किया है ।

उदाहरणान्तरं यथा—

" मधुरं वीणारणितं † पञ्चमसुभगश्च कोकिलालापः ।
गीतिः पौरबधूनामधुना ‡ कुसुमायुधं प्रबोधयति " यथा वा—

§ " केशववंशजगीतिर्लोकमनोमृगहारिणी जयति ।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्या ॥ ८ ॥"

१ २ ३ ४ ५ ल० ७ गु०
–ऽ ऽ–। ऽ।–ऽ ऽ–ऽ।।–ऽ ऽ–।–ऽ ऽ— ऽ–

**आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।**

* "लक्ष्मैतत्सप्तगणा गोपेता" इत्यादि ।

† पञ्चमाख्येन स्वरेण मनोहारी । ‡ कुसुमायुधम् = कामम् । पौरबधूनां गीतिः ॥ नागराङ्गनानां गानम्, गीतिनामकं छन्दश्च ।

§ केशवेति—केशववंशजस्य = कृष्णवेणोर्गीतिः जयति सर्वोत्कर्षेण वर्त्तते इत्यर्थः । कीदृशी–लोकमनोमृगहारिणी = लोकानां मन एव मृगः तस्य हारिणी वशीकरण-समर्था । गोपीमानग्रन्थेर्विमोचनी=वल्लवस्त्रीणां मानग्रन्थेरुद्घाटयित्री । दिव्यगायनाश्चर्या= अलौकिकालापकुतूहलिनी । मधुरमिति, केशव–इति चोभयत्रापि द्वयोर्दलयोः आर्यायाः प्रथमदलोक्तं लक्षणं बोध्यम् ।

१ २ ३ ४ ५ ल० ७ गु०

—S । ।—S । ।—। । S—। । S—S S— ।—S S—S

**यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥**

उपगीतिं लक्षयति—आर्येति। आर्याद्वितीयकेऽर्धे = आर्याया उत्तरार्धे द्वितीये भागे इति यावत् यत् लक्षणम् "तस्मादिह भवति षष्ठो लः" इत्येवंरूपं गदितम् = उक्तम् तत् यदि उभयोः = द्वयोरपि दलयोः = भागयोः स्यात् तदा मुनिः = पिङ्गलः ताम् "उपगीतिम्" ब्रूते उदाहरणञ्चेदमेव। अत्र द्वयोर्दलयोः यथाक्रमं—'क्ष' 'मु' इत्येको लः षष्ठो गणः।

भाषा—यदि आर्या के द्वितीय भाग में कथन किया हुआ लक्षण दोनों भागों में हो तब उस छन्द को पिङ्गलमुनि "उपगीति" कथन करते हैं। उदाहरणान्तरं यथा वा—

गान्धर्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि।
इति समवेत्य मुमुक्षुभिरुपगीतिस्त्यज्यते देशः॥

अत्र द्वयोर्भागयोर्यथाक्रमं 'ज' 'ज्य' इति लघ्वेकमात्रारूपः षष्ठो गणः॥ ९॥

१ २ ३ ४ ५ ल० ७ गु०

S S—। । S—। । S—S । ।—। । S—।—S S—S

**आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याम्।**

१ २ ३ ४ ५ ६ ७ गु०

S S—S । ।—। । S—S S—S S—। S ।—S S—S

**सोद्गीतिः किल कथिता तद्वद्यत्यंशभेद-संयुक्ता ॥ १० ॥**

उद्गीतिं लक्षयति—आर्याशकलेति। आर्याशकलद्वितयम्=यस्याः आर्यायाः खण्डद्वयम् व्यत्ययरचितम् = व्यत्ययेन विपर्ययेण रचितं भवेदितिशेषः अर्थात् प्रथमो भागः द्वितीयभागलक्षणोपेतः द्वितीयश्च प्रथमभागोक्तलक्षणयुक्, स्यात् तदा किल = निश्चयेन सा "उद्गीतिः" गदिता = कथिता। कीदृशी—तद्वद्यत्यंशभेदसंयुक्ता = पथ्याद्यार्यादिभेदवदेव यत्या विरामेण योंशभेदः पादभेदः तेन संयुक्तेत्यर्थः।

भाषा—यदि आर्या के दोनों भाग व्यत्यय = विपरीतक्रम से हों अर्थात् द्वितीय भाग को प्रथम तथा प्रथम को द्वितीय करलिया जाय और आर्या के समान ही यति, अंशादि भेद से युक्त हों तब वह छन्द "उद्गीति" नाम से कहाता है। जैसा कि इसी में दोनों भागों का व्यत्यय पाया जाता है॥ १०॥ उदा० यथा वा—

* " नारायणस्य संततमुद्गीतिः संस्मृतिर्भक्त्या ।
अर्चायामासक्ति र्दुस्तरसंसारसागरे तरणिः " ॥ यथा वा—
उद्गीति रत्र नित्यं प्रवर्त्तते कामचपलानाम् ।
तस्मान्मुने ! विमुञ्च प्रदेशमेतं समेत मेताभिः ॥ इति ॥ १० ॥

१ २ ३ ४ ५ ६ ७ गु० गु०

S S-S S-S । । । । S-S S-। S ।-। । S-S-S

**आर्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।**

१ २ ३ ४ ५ ६ ७ गु० गु०

। । S-S S-। । S-। S ।-S । ।-। S ।-S S-S-S-

**इतरत्तद्वन्निखिलं दलं यदीयमुदितेयमार्यागीतिः ॥ ११ ॥**

**आर्यागीतिं लक्षयति**—आर्यापूर्वार्धमिति । **यदि आर्यापूर्वार्धम्=आर्यायाः प्रथमदलम् निधने=अन्ते एकेन अधिकेन गुरुणा युक्तं स्यादिति शेषः, यदि च इतरत् दलम्=उत्तरार्धमपि निखिलम्=समग्रम् तद्वत्=पूर्वार्धवत् एव, अर्थात् द्वितीयदलमपि अधिकेनैकेन गुरुणोपेतं भवेत् तदा इयम् " आर्यागीतिः " उच्यत इति शेषः । एवं द्वयोर्द्वयोर्भागयो र्द्वात्रिंशत् ३२ मात्रा भवन्ति ।**

**भाषा**—यदि आर्या का प्रथमार्ध एक अधिक गुरु से युक्त हो, यां यों कहो कि—पूर्वार्ध में सात गण रखकर दो गुरुओं का निवेश किया जाय और उत्तरार्ध भी पूर्वार्ध के समान हो तो उसको आचार्य " आर्यागीति " नाम से कथन करते हैं । इस प्रकार प्रत्येक भाग में ३२, ३२ मात्रा होती हैं । ( उदा० )यथा वा—

**" हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः ।**
**¶ आर्या गीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धम् "**

---

* नारायणस्येति—श्रीविष्णोः सततम्=निरन्तरम् उद्गीतिः=कथनम् अर्थात् भगवन्नामकीर्त्तनम्, भक्त्या=निरतिशयानुरागेण संस्मृतिः=स्मरणम् अर्चायाम्=प्रतिमादिपूजायाम् आसक्तिः=श्रद्धा श्रद्धया तत्प्रवणता वा ( सर्वमिदम् ) दुस्तरसंसारसागरे=अपारप्रपञ्चपारावारे तरणिः=नौका वर्त्तत इति शेषः । मुक्तेरेतानि साधनानीति भावः । अत्रापि—आर्याया उत्तरार्धस्य लक्षणं प्रथमभागे, प्रथमार्धस्य चोत्तरभागे घटत इति गणयोजनया विज्ञेयम् ।

**प्र०+**—गीतेः किं लक्षणम् ? के च गीतिभेदाः ? कानि चोदाहरणानि अस्य (उ०) पृ० ८ तः २१ पृ० पर्यन्तम्

¶ आर्याः गीतिं गायन्तीति क्रियाकारकसम्बन्धः—" हर्षाश्रुस्तिमितदृश"—इति उत्तमभक्तलक्षणम् । श्रीपतेश्चरितसम्बद्धमिति क्रियाविशेषणम् । प्रमोदेन हृदयसत्त्वोद्रेकेण यो रोमाञ्चः पुलकावलीविकासः स एव कञ्चुकः, तेन अञ्चितो व्याप्तो देहः शरीरं येषाम्

अत्र द्वयोर्दलयोरन्ते एकैकस्य गुरोराधिक्यम्॥ यथा वा—

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्म परम्।
आत्मानं भावयतो भवमुक्तिः स्यादितीयमार्यागीतिः॥ इति।

इति गीतिप्रकरणम्।

# अथ वैतालीयप्रकरणम्।

६ मात्रा र० ल०गु० ८ मात्रा र० ल०गु०

ऽ। ।ऽ- ऽ।ऽ-।-ऽ- ऽ। ।ऽऽ-ऽ।ऽ-।ऽ

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥१२॥

वैतालीयं लक्षयति—"षड्" इति। विषमे पादे = प्रथमतृतीयचरणे षट् कलाः = मात्राः स्युः। समे = द्वितीये चतुर्थे च अष्टौ कलाः स्युः, ताश्च = ताः पुनः कलाः समे पादे निरन्तराः = व्यवधानरहिताः केवलं लघुरूपा नो स्युः=नैव भवेयुः किन्तु गुरुयुता अपि स्युः। विषमे तु नेदं बन्धनम् अर्थात् प्रथमतृतीयचरणे लघुरूपा अलघुरूपा वा यथारुचि मात्रा निवेशनीयाः। किञ्च—अत्र = वैतालीये समा = द्वितीया चतुर्थी षष्ठी च कला पराश्रिता = परायामग्रेभवायां तृतीयायां पञ्चम्यां सप्तम्यां वा मिलिता न भवेत् अर्थात् द्वितीयतृतीयादिकलानामेकेन गुरुणोपादानं न कार्यम्। अन्ते = उक्तानां कलानां मात्राणाम् परस्तात् रलौ = रगणलघू गुरुश्च भवतीति वैतालीयलक्षणम्। अत्र विषमपादयोः आद्यासु षण्मात्रासु अष्टौ विकल्पाः। यथा—ऽऽऽ,ऽ।।ऽ,।।ऽऽ,।।।।।।,ऽऽ।।, ।।ऽ।।,।।।।ऽ इति। समपादयोराद्यास्वष्टमात्रासु त्रयोदशविकल्पाः—ऽऽऽऽ, ऽऽऽ।।, ऽऽ।।ऽ,ऽ।।ऽऽ,।।ऽऽऽ, ऽऽ।।।।, ऽ।।ऽ।।, ऽ।।।।ऽ, ।।।।ऽऽ,।।ऽऽ।।,।।ऽ।।ऽ,।।ऽ।।।।,।।।।ऽ।। इति। प्रपञ्चस्त्वन्यत्र। दर्शितं लक्षणं चात्रैव योजनीयम्। लक्षणसारस्तु—यत्र प्रथमे पादे तृतीये च चतुर्दशमात्राः, द्वितीये चतुर्थे च षोडश, तद् "वैतालीयं" नाम छन्दः। परन्तु उभयोरपि पादयोरन्ते रगणलकारगकाराः कर्त्तव्याः। इदञ्च वैतालीयस्यार्धम्। परार्धमप्येवम्।

भाषा—जिस ( मात्राछन्द ) के विषम = प्रथम तृतीय पाद में छ ( ६ ) तथा सम = द्वितीय चतुर्थ पाद में ( ८ ) आठ मात्रा हों परन्तु द्वितीय, चतुर्थ पाद

की मात्रा केवल लघुरूप वा गुरुरूप न होनी चाहिये, किन्तु लघुगुर्वात्मक मिश्रित हो तथा सममात्रा अगली मात्रा के साथ मिली हुई भी न हो और अन्त में एक रगण, एक लघु तथा एक गुरु का होना आवश्यक है ऐसे लक्षणयुक्त मात्राछन्द को * "वैतालीय" कहते हैं ॥ उदाहरणं यथा वा—

।।ऽ।।ऽ।ऽ ।ऽ ।।ऽऽ।।ऽ ।ऽ।ऽ

शवशोणितपञ्जराञ्जितं पुरुषान्त्रग्रथितोद्ध्वमूर्धजम् ।

।।ऽ।।ऽ। ऽ।ऽ ऽऽऽ।।ऽ।ऽ ।ऽ

वपुरन्तरवह्निदीपितं वैतालीयमिदं विलोक्यताम् ॥

एवमत्र दर्शितरेखाभिर्लक्षणयोजनमवसेयम् ॥१२॥

६मात्रा० र० य० ८मात्रा र० य०

ऽऽऽ ऽ।ऽ ऽऽ ऽऽ ऽ।।-ऽ।ऽ-।ऽऽ

**पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम् ॥१३॥**

**वैतालीयभेदान् वर्णयन् प्रथममौपच्छन्दसिकं लक्षयति—** "पर्यन्त" इति। **पर्यन्ते=विषमसमपादयोः षण्णामष्टानाञ्च कलानामन्ते यौ=रगणयगणौ स्याताम् शेषम्=लक्षणं तथैव=पूर्वोक्तसामान्यवैतालीयवदेव स्यात् अर्थात् षडष्टकलानियमादीनि तथैव स्युः तदा सुधीभिः=छन्दोविद्भिः तत् "औपच्छन्दसिकं" नाम वैतालीयम् उक्तम्=गदितम्। अयमाशयः—यदि वैतालीये एव छन्दसि प्रतिपादमेकस्यैव गुरोराधिक्यं क्रियेत तदा विषमपादे षोडश, समपादे च अष्टादश मात्रा भवन्ति,एवं सति वैतालीयभेदः "औपच्छन्दसिकं" नाम।**

**भाषा**—जब अन्त में यगण और रगण रखा जाय अर्थात् वैतालीय के चारों पादों के अन्त में एक २ गुरु का अधिक निवेश किया जाय और शेष मात्राओं का निवेश पूर्ववत् हो, उसको छन्दःशास्त्रज्ञ "औपच्छन्दसिक" कथन करते हैं। उदाहरणञ्चान्यत्—यथा—

।।ऽ।। ऽ। ऽ।ऽऽ ।।ऽऽ। ।ऽ।ऽ।ऽऽ

"परमर्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम् ।

।।ऽ।।ऽ।ऽ ।ऽऽऽऽऽ ।।ऽ ।ऽ। ऽऽ

अनवस्थितमर्थलुब्धमारादौपच्छन्दसिकं जहीहि मित्रम् ॥ १३ ॥

६ मात्राः भ० २गु० ८मात्राः भ० २गु०

ऽऽ।।- ऽ।।-ऽऽ-ऽ ।।ऽ।। ऽ।।-ऽऽ-

**आपातलिका कथितेयं भाद् गुरुकावथ पूर्ववदन्यत् ॥१४॥**

**आपातलिकां लक्षयति—**आपातलिकेति—**यदि भात्=भगणात् परौ गुरुकौ=द्वौ गुरू अन्यत् वैतालीयसामान्यलक्षणोक्तं भवेत्**

तदा इयम् "आपातलिका" कथिता। अर्थात् यत्र षरणाम् अष्टानां च मात्राणां पर्यन्ते ( विषमे समे च पादे ) भगणात् परं द्वौ गुरू भवेतां तच्छन्दः "आपातलिका" नाम। रेफलघुगुरूणामपवादः। यत्त्वत्र रत्नसंग्रहकर्त्रा "समविषमपादयोः षरणामष्टानां च कलानामन्ते"-इत्यादि व्याख्यातं भाषायामपि च तथैवानूदितं तद्भ्रान्तिविलसितम् वैतालीयसामान्यलक्षणस्यातथात्वादिति सन्तः सन्तु साक्षिणः।

**भाषा**—जिसके प्रथम, तृतीय पाद की छः मात्राओं के अन्त में और द्वितीय, चतुर्थ पाद की आठ मात्राओं के अन्त में एक भगण तथा दो गुरु हों उस छन्द का नाम "आपातलिका" है॥ यथा वा—

S I I S S I I S S S S S I I S I I S S

* पिङ्गलकेशी कपिलाक्षी वाचाटा † विकटोन्नतदन्ती

S S I I S I I S S I I I I S I I S I I S I

आपातलिका पुनरेषा नृपतिकुलेऽपि न भाग्यमुपैति"॥ १४॥

६ मात्राः र० ल०गु० ८ मात्राः र० ल०गु०

I S I S S I S - I S - I S I S S-S I S-I S

## तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः॥ १५॥

दक्षिणान्तिकां लक्षयति—तृतीययुगिति। समस्तपादेषु=चतुर्ष्वपि पादेषु द्वितीयलः=द्वितीया मात्रा तृतीययुक्=तृतीयया मात्रया युक्ता चेत्स्यात् तदा "दक्षिणान्तिका" नाम वैतालीयभेद इत्यर्थः। चेत्तदाशब्दौ अध्याहर्त्तव्यौ॥

**भाषा**—यदि चारों पदों में दूसरी मात्रा तीसरी मात्रा के साथ युक्त हो तो उसको "दक्षिणान्तिका" कहते हैं। जैसा कि—इसी लक्षणवाक्य में दूसरी मात्रा तीसरी के साथ मिली हुई है (ऐसे ही अन्य पदों में जान लेना॥ १७॥

६ मात्रा र० ल०गु० ८ मात्रा र० ल०गु०

I S I S-S I S-I S- S S S I I-S I S I S-

## उदीच्यवृत्तिर्द्वितीयलः सक्तोग्रेण भवेदयुग्मयोः॥ १६॥

उदीच्यवृत्तिं लक्षयति—उदीच्यवृत्तिरिति। अयुग्मयोः=प्रथमतृतीयोः पादयोः द्वितीयलः=द्वितीयो लघुः द्वितीया मात्रा अग्रेण-लेन-अग्रिमया मात्रया तृतीययेत्यर्थः युक्ता स्यात् शेषं पूर्ववत्

* "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" ( पा० ४। १। ५४ ) इति वा ङीष्।

† "नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च" ( ४। १। ५५ ) इति ङीष्।

तदा "उदीच्यवृत्तिः" नाम छन्दः । यथा प्रकृते "दी" इत्यस्मिन् द्वितीया मात्रा तृतीयया सक्ता ।

**भाषा**—जिस वैतालीस छन्द के विषमपादों में दूसरी मात्रा तीसरी के साथ मिली हो तो उसका नाम "उदीच्यवृत्ति" है । यथा वा—

–। S । । । S । S । S । । S S । । S । S । S

"अवाचकमनूर्जिताक्षरं अतिदुष्टं अतिकष्टमक्रमम् ।

। S । । । S । S । S । । S S । । S । S । S

प्रसादरहितञ्च नेष्यते कविभिः काव्यमुदीच्यवृत्तिभिः" ॥

अत्र 'वा' इत्यत्र प्रथमपादे द्वितीयतृतीयमात्रयोः, तृतीयपादे 'सा' इत्यत्र च तथैव तयोर्योगः ।

६ मात्राः र० ल०गु० ८ मात्राः र० ल०गु०

S S । । – S । S – । – S S । S । । – S । S – । – S

## पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥१७॥

प्राच्यवृत्तिं लक्षयति—पूर्वेणेति । अथ=यदि युग्मयोः=द्वितीयचतुर्थयोः पादयोः पञ्चमो लः=पञ्चमी मात्रा पूर्वेण=चतुर्थेन चतुर्थ्या मात्रयेत्यर्थः । युतः=युक्ता भवेदिति शेषः । (शेषं पूर्ववत्) तदा "प्राच्यवृत्तिः" इति नाम्ना उदिता=कथिता प्राच्यवृत्त्याख्यं वैतालीयं छन्द इत्यर्थः ।

**भाषा**—यदि द्वितीय चतुर्थ पाद में पांचवीं मात्रा चौथी मात्रा के साथ मिली हो तो उसको "प्राच्यवृत्ति" कहते हैं ॥

६ मात्राः र० ल०गु० ८ मात्राः र० ल०गु०

। S । S – S । S – । – S – S । S । । – S । S – – S

## यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥

प्रवृत्तकं लक्षयति—यदेति । यदा पूर्वयोः = उदीच्यवृत्तिप्राच्यवृत्त्योः ओजयुग्मकौ=विषमसमपादौ समौ=तुल्यौ स्याताम् तदा "प्रवृत्तकं" नाम छन्दः । अर्थात् यस्य वैतालीयस्य प्रथमतृतीयपादौ उदीच्यवृत्तेः प्रथमतृतीयपादसदृशौ स्याताम्, द्वितीयचतुर्थपादौ च प्राच्यवृत्तेः द्वितीयचतुर्थपादसदृशौ भवेताम् "तत्प्रवृत्तकं" नाम छन्दो भवति ।

**भाषा**—(जब) जिस वैतालीय का प्रथम तृतीय पाद उदीच्यवृत्ति के प्रथम तृतीय पाद के सदृश हो और द्वितीय चतुर्थ पाद प्राच्यवृत्ति के द्वितीय चतुर्थपाद के सदृश हो तब उसको "प्रवृत्तक" नाम से कथन करते हैं । उदाहरणान्तरं यथा वा—

। ऽ । । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ
"इदं भरतवंशभूभृतां श्रूयतां श्रुतिमनोरसायनम्।

। ऽ । । । ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ । ऽ
पवित्रमधिकं शुभोदयं व्यासवक्त्रकथितं प्रवृत्तकम्॥

अस्मिन् पद्ये प्राच्यवृत्त्युदीच्यवृत्तिलक्षणं घटते अत इदं प्रवृत्तकं नाम वैतालीयम्।

८ मात्राः र० ल०गु०

ऽ । ऽ । । - ऽ । ऽ - । ऽ

## अस्य युग्मरचिताऽपरान्तिका॥ १९॥

अपरान्तिकां लक्षयति—अस्येति। अस्य = प्रवृत्तकस्य युग्मरचिता = युग्मेन पादेन समपादवृत्तिलक्षणेन सम्पूर्णा प्रत्येकं रचिता "अपरान्तिका" नाम। अर्थात् प्रत्येकं चत्वारोऽपि पादाः षोडशकलावन्तः स्युः अथ च पञ्चमी मात्रा चतुर्थ्या मात्रया युक्ता स्यात् तदा "अपरान्तिका" नाम वैतालीयभेदः।

भाषा—जब चारों पाद प्रवृत्तक के द्वितीय, चतुर्थ पाद से बनाये जायं या यों कहो कि—जिसके प्रत्येक पाद में सोलह २ मात्रा हों और पांचवीं मात्रा चौथी से मिली रहे उसका नाम "अपरान्तिका" है॥ (उदा०) यथा वा—

स्थिरविलासनतमौक्तिकावली
कमलकोमलाङ्गी मृगेक्षणा।
हरति कस्य हृदयं न कामिनः
सुरतकेलिकुशला परान्तिका॥

अत्र सर्वेषु पादेषु पंचमी मात्रा चतुर्थ्या मिमिश्रितास्ति॥ १९॥

६ मात्राः र० ल०गु०

। ऽ । ऽ - ऽ । ऽ - । ऽ

## अयुग्मगा चारुहासिनी॥२०॥

चारुहासिनीं लक्षयति—अयुग्मगेति। अयुग्मगा = प्रवृत्तकस्य अयुक्पादैः प्रथमतृतीयपादैरित्यर्थः, रचिता भवेत् तदा "चारुहासिनी" नाम छन्दः। अर्थात् यस्य वैतालीयस्य चतुर्ष्वपि पादेषु चतुर्दश २ मात्रा भवेयुः द्वितीया च मात्रा तृतीयया मिश्रिता स्यात् तत् चारुहासिनीति नाम्ना व्यवह्रियते। यथात्रैव "यु" इत्यत्र द्वितीयातृतीययोर्मात्रयोः योगः।

भाषा—जब प्रवृत्तक के विषमपादों से ही चारों पाद बनाए जायं अर्थात् जिसके चारों पादों में चौदह २ मात्रा हों और दूसरी मात्रा तीसरी के साथ मिली हो उसका नाम "चारुहासिनी" है॥ (उदा०) यथा वा—

मनाक्प्रसृतदन्तदीधितिः स्मेरोल्लसितगण्डमण्डला।
कटाक्षललिता तु कामिनी मनोहरति चारुहासिनी॥

अत्रापि सर्वेषु पादेषु "ना" इत्यादौ द्वितीयामात्रा तृतीयया मिश्रिता॥

इति वैतालीयप्रकरणम्।

# अथ वक्त्रप्रकरणमारभते।

गु० म० य० ल०गु० म० य० गु०

ऽ-ऽऽऽ-।ऽऽ-ऽ-ऽ-ऽऽऽ-।ऽऽ-ऽ

**वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्॥२१॥**

वक्त्रमिति। **आद्यात्=प्रथमात् अक्षरात् ऊर्ध्वमिति शेषः नसौ=नगणसगणौ न स्याताम् अन्यन्मगणादि तु यथेष्टं स्यात्, चतुर्थात् अक्षरात् परतः यः=यगणः स्यात् तदा अनुष्टुभि=अनुष्टुप् इत्याख्ये प्रकरणे "वक्त्रम्" नाम छन्दः ख्यातम्=कथितं पूर्वाचार्यैरिति शेषः। समयोश्च पादयोः प्रथमाक्षरादूर्ध्वं रगणोऽपि नेति सम्प्रदायः।**

**भाषा**—यदि प्रथम अक्षर से परे नगण तथा सगण न हो और चतुर्थ अक्षर से परे यगण अवश्य हो तब अष्टाक्षरपादात्मक अनुष्टुप् जाति में "वक्त्र" नामक छन्द कहाता है। चौथे अक्षर से परे रगण का न होना भी सम्प्रदायसिद्ध है। उदाहरणान्तरं यथा—

।।ऽऽ।ऽऽ।।।ऽऽ। ऽऽऽ
नवंधाराम्बुसंसिक्त वसुधा गन्धि निश्वासम्।
ऽ।ऽ।।।।ऽ।ऽ ऽ।।ऽऽऽ
किञ्चिदुन्नतघोणाग्रं मही कामयते वक्त्रम्॥ (हलायुधवृत्तिः)

अन्यच्च—(उदा०)

ऽऽ।ऽ। ऽऽऽऽऽ ।।।ऽ ऽऽ
दुर्भावितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः।
ऽऽ।ऽ।ऽऽ। ऽऽऽऽ।ऽऽऽ
मातुर्मनोहरन्त्येव दौर्ललित्योक्तिभिर्बालाः॥२१॥

ल० त० य० गु०गु० म० ज० गु०

।-ऽऽ।-।ऽऽऽ-ऽ- ऽऽऽ-।ऽ।-ऽ

**युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्॥२२॥**

**अथास्य भेदानाह**—युजोरिति । **युजोः = द्वितीयचतुर्थपादयोः सरिद्भर्त्तुः = चतुर्थाक्षरात् परतः जेन = जगणेन "पथ्यावक्त्रम्" नाम प्रकीर्त्तितम् पिङ्गलेनेतिशेषः ।**

**भाषा**—यदि सम पादो में चतुर्थ अक्षर से परे जगण किया जाय तब उसको "पथ्यावक्र" कहते हैं । (उदा०) यथा वा—

SS SI ISSISSSSISIS

नित्यं नीति निषण्णस्य राज्ञो राष्ट्रं न सीदति । अजातमृतमूर्खेभ्यो, मृताजा

IISSISSSSSSSISIS

सुतौ त

नहि पथ्याशिनः काये जायन्ते व्याधि वेदनाः ॥ यतस्तौ स्वल्पदुःखाय, य

अत्र द्वितीयचतुर्थपादयोः जगणः ॥ २२ ॥

वज्जीवं जडो देहे

ल० य० ज० गु०ल० भ० य० ल०

II SS-IS I-S-I-SI I-I SS-I

## अयुजोर्जेन वारिधेस्तदेव विपरीतादि ॥ २३ ॥

**विपरीतपथ्यां लक्षयति**—अयुजोरिति । **अयुजोः=विषमपादयोः प्रथमे तृतीये चेत्यर्थः यदि चतुर्थादक्षरात् परतो जेन = जगणेन ( रचना स्यात् ) तदा तदेव=पथ्यावक्त्रमेव विपरीतादि=विपरीतपथ्यावक्त्रं भवतीत्यर्थः ।**

**भाषा**—यदि विषम पादों में चतुर्थ अक्षर से परे जगण रखा जाय तो उसक नाम "विपरीतपथ्यापक्र" जानना । (उदा०) यथा वा—

SISSISISS S S SISSS

भर्त्तुराज्ञानुवर्त्तिनी या स्त्री स्यात् सा स्थिरा लक्ष्मी ।

SISSISIS IISSISSS

स्वप्रभुत्वाभिमानिनी विपरीता परित्याज्या ॥

अत्र प्रथमे तृतीये च पादे चतुर्थाक्षरातपरो जगणः ॥ २३ ॥

ल० य० न० गु०ल० म० य० गु०

IISS-III-S-I-SSS-I S-S-S

## चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २४ ॥

**चपलावक्त्रं लक्षयति**—चपलेति । **अयुजोः = विषमयोः पादयोः पयोराशेः = चतुर्थादक्षरात् परतः चेद्=यदि नकारः = नगणः स्यात् तदा "चपलावक्त्रम्" नाम तत् ।**

**भाषा**—यदि विषम पादों में अर्थात् प्रथम तृतीय पाद में चतुर्थ अक्षर से परे नगण हो तो उसका नाम "चपलावक्र" जानना । उ० यथा वा—

ऽ।ऽऽ।।।ऽऽ।ऽऽ।ऽऽऽ
क्षीयमाणाग्रदशना वक्र निर्मांस नासाग्रा।

ऽ।ऽऽ।।।ऽ।।ऽऽ।ऽऽऽ
कन्यका वाक्यचपला* भवते धूर्त्तसौभाग्यम्॥

अत्र प्रथमे तृतीये च पादे चतुर्थादक्षरात् नगणः॥ २४॥

म य० गु०गु० भ० स० ल०गु

ऽऽ ऽ-ऽ।ऽ ऽ-ऽ-ऽऽ ।-।।ऽ-।ऽ

**यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता॥ २५॥**

**युग्मविपुलां लक्षयति**—यस्यामिति। **यस्यां पथ्यायाम् युग्मे = द्वितीये चतुर्थे च पादे सप्तमः वर्णः लः = लघुः अस्तीतिशेषः सा "युग्मविपुला" ज्ञेयेत्यर्थः।**

**भाषा**—जिस पथ्या के द्वितीय चतुर्थ पाद में सातवां अक्षर लघु हो उसको "युग्मविपुला" कहते हैं। यथा वा—(उदा०)

।ऽ।ऽऽ।।ऽ।ऽऽऽ।ऽऽ
इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी।

ऽऽ।ऽऽ।।ऽऽ।ऽऽ।ऽ।ऽ
इन्दीवराक्षी हृदयं दन्दहीति तथापि मे॥

अत्र द्वितीये पादे "नि" इति चतुर्थे पादे "पि" इति लघुर्वर्णः। शिष्टं पूर्ववत्। कस्यचिद्विप्रलम्भिन उक्तिरियम्॥ २५॥

गु० य० ज० गु०

ऽ-ऽऽ।ऽ।-ऽ

**सैतवस्याखिलेष्वपि॥ २६॥**

**अत्रैव मतान्तरमाह**—सैतवस्येति। **सैतवस्य आचार्यस्य मते अखिलेष्वपि पादेषु सप्तमो लः = लघुः स्मृत इति शेषः।**

**भाषा**—"सैतव" नामक आचार्य के मत में समग्र पादों में सातवां वर्ण लघु होता है। यथा वा—(उदा०)

ऽ।ऽ।।ऽ।ऽऽऽ।।।ऽ।ऽ
सैतवेन पथार्णवं तीर्णो दशरथात्मजः।

ऽऽ।।।ऽ।ऽ।ऽऽऽ।ऽ।ऽ
रक्षः-क्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना॥

अत्र सर्वत्रैव सप्तमो लघुः॥ २६॥

---

* "भवते" इत्यात्मनेपदप्रयोगश्चिन्त्यः। प्राप्त्यर्थस्तु न घटते। अथवा "धूर्त्तसौभाग्यम्" इति कर्सैव स्यात्॥

गु० र० भ० गु०

ऽ–ऽ । ऽ–ऽ । ।–ऽ

## भेनाब्धितो भाद्विपुला ॥ २७ ॥

भविपुलां लक्षयति—भेनेति । यदि अब्धितः चतुर्थाक्षरात् भेन = भगणेन कृत्वा उपलक्षिता चेत् तदा भात् परा पिपुला "भविपुला" नाम इत्यर्थः।

भाषा—यदि चतुर्थ अक्षर से परे भगण हो तो उसका नाम "भविपुला" होता है।

अत्र केचित् "अखिलष्वेपि" इत्यनुवर्त्तयन्ति । अपरे तु विषमपादविषया एवेयं "भविपुला" इत्याहुः। (उदा०) यथा वा—

।ऽ ।ऽ ऽऽ।ऽ।ऽ ऽऽ । ऽ।ऽ
इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी ।
ऽऽ।ऽऽ ।।ऽ।।ऽ। ।ऽ। ऽ
इन्दीवराक्षी हृदयं दहतीति तथापि मे ॥

अत्र तृतीये पादे चतुर्थवर्णात्परः "क्षीहृद" इति भगणः ॥ २७ ॥

गु० य० र० गु०

ऽ–।ऽ ऽ ऽ।ऽ–ऽ

## इत्थमन्या रश्चतुर्थात् ॥ २८ ॥

रविपुलां लक्षयति—इत्थमिति । चतुर्थात् अक्षरात् परश्चेत् रः=रगणः तदा "रविपुला" इत्युच्यते।

भाषा—यदि चतुर्थ अक्षर से परे रगण हो तो उसको "रविपुला" कहते हैं।

ऽ । ऽ
लक्ष्मीपतिं लोकनाथं रथाङ्गधरमीश्वरम् ।
ऽ । ऽ
यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि त्रयीतनुम् ॥

अनियतपादरेफेयमिति सम्प्रदायः । छन्दःसारसङ्ग्रहादिषु तथा दर्शनात् ॥२८॥

गु० य० न० गु०

ऽ– ।ऽ ऽ। । ।–ऽ

## नोम्बुधेश्चेन्न विपुला ॥ २६ ॥

नविपुलां लक्षयति—नोम्बुधेरिति । अब्धेः=चतुर्थादक्षरात् परः नः=नगणश्चेत् तदा तत्पूर्वा अन्या विपुला भवेत् "नविपुला" इत्यर्थः

भाषा—यदि चतुर्थक अक्षर से परे नगण हो तो उसका नाम "नविपुला" जानना। (उदा०) यथा वा—

।।।
तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ बाल्मीकिर्मुनिपुङ्गवम्॥

तद्विपुलाद्या अप्यनेके भेदाः सन्तीति। तथाहि—

गु० म० त० गु०

ऽ- ऽ ऽ ऽ-ऽ ऽ।-ऽ

तोऽब्धेस्तत्पूर्वान्या भवेत्॥ ३०॥

इति वक्त्रप्रकरणम्।

# अथ मात्रासमकप्रकरणम्।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
द्वि क गु णि त व सु ल घु र च ल धृ ति रि ति॥३१॥

तत्र अचलधृतिं लक्षयति—द्विकेति। द्विकगुणितवसुलघुः= द्विकाभ्यां द्वाभ्यां गुणिताः वसवः=अष्टौ लघवो यस्यां सा अर्थात् षोडशलघवो यस्यां सा तादृशी "अचलधृतिः" इति नाम छन्दो भवति। एतेन मात्रासमकादिषु षोडशमात्रत्वमधिकृतं वेदितव्यम्। इयञ्च "गीत्यार्या" नाम जातिरिति पिङ्गलमुनिः।

भाषा—जिस में दो से गुणित किये हुए आठ लघु हों अर्थात् सोलह लघु हों उसका नाम "अचलधृति" छन्द है। (उ०) यथा वा—

*म द क ल ख ग कु ल क ल र व मु ख रि णि
वि क सि त स रि सि ज प रि म ल सु र भि णि॥
गि रि व र प रि स र स र सि म ह ति ख लु
र ति र ति श य मि ह म म हृ दि वि ल स ति॥

अत्र प्रतिपादं षोडशलघवः॥ ३१॥

---

* **मदकलेति**—मदकलं = मदमत्तं यत् खगकुलं = पक्षिगणः, तस्य यः कलरवो मधुरकूजितं तेन मुखरिणि शब्दायमाने, विकसन्ति प्रफुल्लितानि यानि सरिसिजानि कमलानि तेषां परिमलेन विमर्दोत्थेन मनोहारिगन्धेन सुरभिणि सुगन्धे एवं भूते महति = विशाले इहाऽस्मिन् गिरिवरपरिसरसरसि = सुन्दरपर्वतप्रान्तभूभागवर्त्तिनि सरोवरे खलु = निश्चयेन ममहृदि=मनसि रतिः=भोगेच्छा अतिशयं समधिकं (यथा तथा) विलसति रत्युद्दीपकविभावसत्वादिति भावः।

ल०  गु०

१-२ ३-४ ५ ६ ७-८ ९ १० ११-१२ १३-१४ १५-१६
मा त्रा स म कं न व मो ल्गो ऽन्त्यः ॥३२॥

मात्रासमकं लक्षयति—मात्रेति । यत्र पादे नवमः ल्=लघुः अन्त्यः=अन्तिमः गः=गुरुश्च स्यात् तत् "मात्रासमकम्" इत्युच्यते। एवं षोडशमात्राः सर्वपादनीयाः।

भाषा—जहां षोडश मात्राओं में नवमी मात्रा लघु और अन्त की (१६वीं) गुरु हो तो उसका नाम "मात्रासमक" होता है। (उ०) यथा० वा—

(९) (गु) (९) (गु)
अश्मश्रुमुखो विरलैर्दन्तैर्गम्भीराक्षो मितनासाग्रः।
(९) (गु) (९) (गु)
निर्मांसहनुः स्फुटितैः केशैर्मात्रासमकं लभते दुःखम् ॥३२॥

पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनं इह संसारे भव दुस्तारे कृपयापारे पाहि मुरारे

ज०

१-२ ३-४ ५ ६-७ ८ ९-१० ११-१२ १३-१४ १५-१६
जो न्ला व था म्बु धे र्वि श्लो कः ॥३३॥

विश्लोकं लक्षयति—जोन्लाविति। अम्बुधेः=कलाचतुष्टयादूर्ध्वम् जः=जगणः अथवा न्लौ=चतुर्लघुरूपो वा गणः स्यात् शेषं पूर्ववत् तदायं "विश्लोको" नाम मात्रासमकं छन्दः।

भाषा—यदि चार मात्राओं के अन्त में जगण हो अथवा चार लघु हों तो उसका नाम "विश्लोक" है। (उदा०) यथा वा—

भ्रात गुणरहितं विश्लोकं दुर्णयकरणकदर्थितलोकम्।
जातं महितकुलेऽप्यविनीतं मित्रं परिहर साधु विगीतम्॥

अत्र चतुर्ष्वपि पादेषु कलाचतुष्टयादूर्ध्वं चत्वारो लघवः॥ ३३॥

ज०

१-२ ३ ४ ५-६ ७-८ ९ १०-११ १२ १३-१४ १५-१६
त द्युग ला द्वा न वा सि का स्यात् ॥३४॥

वानवासिकां लक्षयति—तद्युगलादिति। तद्युगलात्=अम्बुधियुगलात् अष्टमात्रानन्तरं यदि जो न्लौ वा स्याताम् तदा सा "वानवासिका" नाम मात्रासमकम्।

भाषा—यदि आठमात्राओं के अनन्तर जगण वा चार लघु हों तो उसको "वानवासिका" कहते हैं। (उदा०) यथा वा—

जपन्ने तु मूढो ...

लपद्ये यथा—"लोकहितार्थं हरिहरमूर्तौ ॥ इति ॥३४॥

ल० ल०ल०
१-२ ३-४ ५ ६ ७ ८ ९-१० ११-१२ १३-१४ १५-१६
**बा णा ष्ट न व सु यदि ल श्चि त्रा ॥३५॥**

**चित्रां लक्षयति**—वाणेति। **बाणाः=पञ्च । पञ्चाष्टनवसु यदि लः=लघुः स्यात् शेषं पूर्ववत् तदा "चित्रा" नाम मात्रासमकम्।**

**भाषा**—यदि पांचवीं आठवी और नवमी मात्रा लघु हो तो वह "चित्रा" नामक मात्रासमक होता है। उ० य० वा—

(।) (।।)
यदि वाञ्छसि परपदमारोढुं,
(।)(।)(।।)
मैत्रीं परिहर स ह वनिताभिः।
(।)(।)( )
मुह्यति मुनिरपि विषयासङ्गात्
(।) (।)(।)
चित्रा भवति हि मनसो वृत्तिः ॥

अत्र चतुर्ष्वपि पादेषु पञ्चमी, अष्टमी, नवमी च मात्रा लघुरूपैव। तथा चाङ्कितमस्माभिः ॥ ३५ ॥

१ २ ३-४ ५-६ ७ ८ ९-१० ११ १२ १३-१४ १५-१६
**उ प चि त्रा न व मे प र यु क्ते ॥ ३६ ॥**

**उपचित्रां लक्षयति**—उपचित्रेति। **नवमे मात्रास्वरूपे परयुक्ते=परेण दशमेन मात्रास्वरूपेण युक्ते सति "उपचित्रा" नाम मात्रासमकं शिष्टं पूर्ववत्।**

**भाषा**—यदि नवमी मात्रा दशमी मात्रा के साथ मिश्रित हो, तब उस मात्रासमक को "उपचित्रा" नाम से कथन करते हैं। (उदा०) यथा वा—

९।१० ९।१०
यच्चित्तं गुरुसङ्गमुदारं विद्याभ्यासमहाव्यसनञ्च।
९।१० ९।१०
पृथ्वी तस्य गुणैरुपचित्रा चन्द्रमरीचिनिभैर्भवतीयम्।

अत्र चतुर्ष्वपि नवमी मात्रा दशम्या सहोपेता। शिष्टं पूर्ववत्।

भ० गु० गु०
१-२ ३-४ ५-६ ७-८ ९-१० ११ १२ १३-१४ १५-१६
**(अ ष्टा भ्यो भा दा नु प चि त्रा) ॥**

ल० ल०ल० गु०

१ २ ३–४ ५ ६ ७ ८ ९ १० ११–१२ १३ १४ १५–१६

य द तीं त कृत विविध ल क्ष्म यु तैः।

ज० गु०

१–२ ३–४ ५ ६–७ ८ ९–१० ११–१२ १३ १४ १५–१६

मा त्रा स मा दि पा दैः क लि तम्।

ज० गु०

१ २ ३ ४ ५–६ ७ ८ ९ १०–११ १२ १३ १४ १५–१६

अनि य त वृ त्तपरि मा ण स हि तं।

ज० गु०

१ २ ३–४ ५ ६–७ ८ ९–१० ११–१२ १३ १४ १५–१६

प्रथि तं ज ग त्सु पा दा कु ल कम्॥ ३७॥

**पादाकुलकं लक्षयति**—यदतीतेति । **अतीतानि पूर्वोक्तानि कृतानि विविधानि नानाप्रकाराणि यानि लक्ष्माणि लक्षणानि तद्युक्तैः मात्रासमादीनां पञ्चानां पादैः कलितं रचितम् तथा अनियतवृत्त०= नियतैकवृत्तलक्षणहीनम् परिमाणे च षोडश-मात्रपादतयैव युतम् तत् जगत्सु "पादाकुलकम्" नाम प्रथितम्=प्रसिद्धमित्यर्थः।**

**भाषा**—जो पूर्वोक्त अनेक प्रकार के लक्षणों से युक्त अर्थात् मात्रासमकादि छन्दों के पादों से रचा गया हो और उसमें किसी एक वृत्त का लक्षण नियत न हो किन्तु एक पाद में किसी वृत्त का अन्य में किसी और वृत्त का लक्षण पाया जाय परन्तु षोडशमात्राओं का परिमाण ठीक रहे ऐसे छन्द को "पादाकुलक" कहते हैं। जैसा कि इसी लक्षणवाक्य में ऊपर के अङ्कों से दर्शाया गया है। अर्थात् प्रथमपाद में मात्रासमक विश्लोक-चित्रा का द्वितीय पादमें विश्लोक-उपचित्रा का, तृतीय पाद में मात्रासमक-वान-वासिका का, चतुर्थपाद में उपचित्रा-विश्लोक का लक्षण मिश्रित पायाजाता है। (उदा०)

यथा वा—

**अलिवाचालित-विकसितचूते काले मदनसमागमदूते।**
**स्मृत्वा कान्तां परिहृतसार्थः पादाकुलकं धावति पान्थः॥**

अस्य चतुर्षु पादेषु षोडशमात्रा अन्ते गुरुश्चास्ति, पुनस्तेषां प्रथमः पादो नवममात्राया लघुत्वात् मात्रासमकलक्षणाक्रान्तो भवति, द्वितीयः पञ्चमाष्टममात्रयोर्लघुत्वात् विश्लोकलक्षणवान्, तृतीयः नवमद्वादशमात्रयोर्लघुत्वात् वानवासिकालक्षणोपेतः, चतुर्थः नवमदशममात्रयोरेकत्र गुर्वक्षरत्वस्थित्या उपचित्रालक्षणसमन्वितो भवति"॥ ३८॥

+वृत्तस्य लो विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥३८॥

अधुना वृत्तस्य लघुगुरुसंख्याबोधोपायमाचष्टे—वृत्तस्येति । वृत्तस्य=यस्य कस्यापि वृत्तस्य लः=मात्रा वर्णैः=अक्षरैर्विना कृताः सत्यः गाः=गुरवो वर्णा भवन्ति इति शेषः । यथा—अस्मिन् पादे चतुर्दशमात्राः सन्ति ताश्च यदा अष्टाक्षरसंख्याया विकलाः कृताः स्युः तदा षट् गुरुवर्णा भवन्तीत्यक्षरबोधनप्रकारः । ताश्च पुनर्मात्रा गुरुभिर्विना कृताः वर्णसंख्या सम्पद्यते, यथा—अत्रैवाद्ये पादे चतुर्दशमात्रा षट्सङ्ख्याकैर्गुरुभिर्हीनाः सत्या अष्टौ जायन्ते तथा च वर्णसंख्यानिष्कर्षः । लैः=लघुभिः विना दले कृते सति गुरवो भवन्ति, यथा—अस्यैव पद्यस्याद्ये पादे चतुर्दशमात्राः ताश्च लघुद्वयसंख्यया विना कृता द्वादश जाताः पुनश्च द्वादशसंख्याया दले कृते षट् जायन्ते एवञ्च तावत्येव संख्या गुरुवर्णानामिति सारः ।

**भाषा**—अब वृत्त के गुरु लघु तथा वर्णों की संख्या के ज्ञान का प्रकार कथन करते हैं—जब वृत्त की ल=मात्रासंख्या में से वर्णसंख्या को घटा दें तो जितनी संख्या बाकी रहे उस वृत्त के पाद में उतने ही गुरु जानने । जब वृत्त की मात्रासंख्या में से गुरुसंख्या को घटा दिया जाय तो जितने शेष हों उतने ही उस पाद में वर्ण=अक्षर जानने चाहिये । गुरुसंख्या के ज्ञान का दूसरा प्रकार यह है कि—जब वृत्त की मात्रासंख्याओं में से लघुसंख्या को घटा दिया जाय तो शेष बचे को पुनः आधा करना चाहिए, उस अर्ध से जो शेष बचे उतने ही गुरु होते हैं । जैसा कि—इसी "वृत्तस्य लो विना वर्णैः" इस पाद की मात्रासंख्या १४ में से वर्णसंख्या ८ को घटा दिया जाय तो ६ शेष होते हैं इसलिए इस में ६ गुरु वर्ण हैं । और मात्रासंख्या १४ में से गुरुसंख्या ६ को घटा देवें तो बाकी ८ बचते हैं सो इस पाद के ८ ही वर्ण हैं । अन्य प्रकार यह है कि—मात्रासंख्या १४ में से लघुसंख्या दो को घटा दो तो शेष १२ बचते हैं । उस का अर्ध करने से ६ होते हैं इसलिए इस में ६ ही गुरु वर्ण हैं । यही रीति अन्यत्र भी जान लेनी ॥ ३८ ॥

इति मात्रासमकप्रकरणम् ।

---

प्र+० —लघुगुरुसंख्याज्ञानस्य कीदृशो विधिः ? कथञ्चासौ घटते इति स्पष्टं निरूप्यताम्
(उ०) अस्य पृ० ३४ पं० १

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ॥

सगुरु शकलयुगलकमपि सुपरिघटितललितपदनिचिति भवति शिखा

मात्रानियमघटितत्वेन मात्रावृत्तप्रसङ्गेन द्विखण्डकानि छन्दांसि वक्तुं प्रारभमाणः प्रथमं शिखाया लक्षणमाह—शिखिगुणितेति। शिखी=वन्हिः। ते च गार्हपत्याहवनीयदक्षिणाग्निभेदेन त्रयो भवन्ति अतः शिखिपदेन त्रित्वसंख्याया बोधो भवति शिखिभिः=त्रिभिः गुणिता ये दश लघवः अर्थात् त्रिंशत् लघवः तैः रचितम् अपगतलघुयुगलम्=लघुद्वयरहितम् एवं सति अष्टाविंशतिलघुसहितमेकं * शकलमिति शेषः इदम्-पूर्वोक्तम् अखिलम्=समग्रमेव त्रिंशल्लघुरचितम् अपरम्=द्वितीयं शकलमपि कार्यम् उत्तरार्धमपि कर्त्तव्यम्। शकलयुगलकमपि सगुरु=एकेनाधिकेन गुरुणा युक्तं स्यात्। पुनः कीदृशं तत् सुपरिघटितललितपदवितति=सुष्ठु परिघटिता रचिता ललिता हृदयाकर्षिणी पदानां विततिः पदराजिर्यत्र सा "शिखा" नाम छन्दो भवतीत्यर्थः।

भाषा—शिखी=अग्नि=तीन संख्या से गुणित किए हुए दश लघु अर्थात् तीस लघुओं से युक्त हो परन्तु उस में से दो लघु निकाल कर शेष २८ लघुओं द्वारा जिसका प्रथमशकल=पूर्वार्ध बनाया जाय, और दूसरा अर्ध भी पूर्ववत् ३० लघुओं से युक्त हो, ( दूसरे में दो लघु कम नहीं होने चाहिये ) और दोनों खण्डों के अन्त में एक २ गुरु भी हो इस प्रकार मनोहर पदावलि से भूषित छन्द "शिखा" कहाता है ॥ ३६ ॥

विनिर्गमविहितशकलयुगललघुललितपदविततिरचितगुणनिचया।

श्रुतिसुखकृदियमपि जगति जि जशिर उपगतवति सति भवति खजा

अथ खजां लक्षयति—विनिर्गमेति ... विन्यासेन विहितं

निवेशितं यत् शकलयुगलं तस्य ये लघवः तैर्ललिता मनोज्ञा या पदानां विततिः विस्तारः तया विरचितः सम्पादितः गुणानां सौकुमार्यादीनां निचयः समुदायो यस्याः सा तादृशी, श्रुतिसुखकृत्=श्रवणयोः सुखकारिणी, ञि=ञकारे जशिरउपगतवति सति जकारात् प्रागुच्चारणं प्राप्ते सति " खजा " भवति अर्थात् " खञ्जा " नाम छन्दो भवति।

**भाषा**—जब शिखा के दोनों अर्धों का विनिमय=व्यत्यास कर दिया जाय अर्थात् प्रथम दल ३० लघुवाला और अन्त में एक गुरु हो, और दूसरा दल २८ लघुवाला और अन्त में एक गुरु से युक्त हो इस प्रकार श्रुति को प्रिय लगने वाले मनोहर पदराजि से भूषित छन्द को " खञ्जा " कथन करते हैं ॥ ४० ॥

१६गु०

**अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ॥**

३२ल०

**दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदवितति भवति॥**

**अथ अनङ्गक्रीडां लक्षयति**—अष्टावर्धे इति। यस्याः अर्धे अष्टौ गाः=गुरवः द्व्यभ्यस्ताः=द्विगुणाः स्युः अर्थात् षोडश गुरवो भवेयुः अपरश्च दलम्=द्वितीयखण्डोऽपि वसुगुणित०=वसुभिः अष्टैः गुणिताः ये सलिलनिधयः=चत्वारः लघवो यत्र अर्थात् द्वात्रिंशत् लघवो यत्र भवेयुः सा " अनङ्गक्रीडा " नाम उक्ता भवति। अपरं दलं कीदृशम्? कविरचितपदवितति=कविना रचिता पदानां विततिर्विस्तारो यत्रेति।

**भाषा**—जिसके प्रथम अर्ध में दो से गुणित आठ अर्थात् १६ गुरु वर्ण हों और द्वितीय भाग में अष्ट गुणित चार४ अर्थात् ३२ लघु हों इस प्रकार सुन्दरपदराजि से युक्त छन्द का नाम " अनङ्गक्रीडा " जानना।

यदि त्वियं वैपरीत्येन रच्येत तदा " ज्योतिराख्या " भवति, तथा चोदाहृतमाचार्येण—

यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रसमतिशयमिह।
आत्मज्योतिर्योगाभ्यासाद् दृष्ट्वा दुःखच्छेदं कुर्याः ॥ इति ॥४२॥

ल०२७ गु०१

ऽ

**त्रिगुणनवलघुरवसितिगुरुरिति दलयुगकृततनुरिह रुचिरा ॥४२॥**

**अथ रुचिरां लक्षयति**—त्रिगुणेति। त्रिभिर्गुणिता नव लघवो यत्र सप्तविंशतिरित्यर्थः अवसितिगुरु=अवसितौ अवसाने गुरु-

र्यस्याः सा तथा इति=अमुना प्रकारेण दलयुगलकृततनुः=दलयुगलेन खण्डद्वयेन कृता तनुः आकृतिः रचना यस्याः सा तथाविधा इह छन्दःशास्त्रे "रुचिरा" इति भण्यते इति शेषः। इयमेव पैङ्गले "चूलिका" इत्युक्तम्।

**भाषा**—जिस में त्रिगुणित नवलघु हों अर्थात् २७ लघु हों और अन्त में एक गुरु हो इस प्रकार दोनों खण्डों से युक्त छन्द का नाम "रुचिरा" है। इस का दूसरा नाम "चूलिका" जानना। उदाहरणं यथा वा—

* रघुकुलनलिनविकसनशशभृति दशमुखरिपुकुलतिमिरहरे।
विषधरविषमविषयविषहरमहसि कुरुरतिमिह दशरथतनये॥

परमत्र द्वितीयदले एकोनत्रिंशत्संख्या लघवोऽन्ते चैको गुरुरस्तीति विशेषः। सत्र एकीयमतानुसारेण चूलिकायां पादाक्षरनियमाभावात् नायुक्त इत्येके॥ ४२॥

इति वृत्तरत्नाकररत्नप्रभायां द्वितीयो मात्रावृत्ताधिकाराऽध्यायः।

# अथ तृतीयोऽध्यायः।

## अथ (१) उक्ता—

ऽ
गश्रीः॥ १॥

वर्णितानि मात्रावृत्तानि, सम्प्रति वर्णवृत्तनिरूपणमारभामहे—तत्र प्रथमाध्यायोद्दिष्टा उक्तादिर्जातिः क्रमशो लक्षयन्नाचार्यः प्रथममुक्ताजात्यन्तर्गतां "श्रीं" नाम छन्दो लक्षयति—"ग" इति। गः=गुरुरेकश्चेत् पादः "श्री" नामच्छन्दः। चतुर्भिः पादैश्च वृत्तपूर्त्तिरिति सर्वत्र ध्येयम्। किञ्च—यत्र यत्र "लक्षणपदानामन्वयश्चिकीर्षितो भवति तत्र यथायोगं-यदि चेत्" प्रभृतीनां पदानामध्याहारो विधेयः। एकाक्षरेण पादेन लक्ष्यलक्षणयोरसङ्ग्रहादर्धोदाहरणमिदम्। पूर्णोदाहरणन्तु "श्रीस्ते सास्ताम्" इति। अत्र एकैकेन गुरुणा अक्षरेण चत्वारः पादाः। इयमेकाक्षरा जातिः—"उक्ता" नामेति सारः।

---

* **रघुकुलेति**। इह दशरथतनये = श्रीरामचन्द्रे रतिम् = प्रीतिं कुरु। कथम्भूते रघुकुल० = रघुकुलमेव नलिनं रात्रिकमलं तस्य विकसनाय विकाशाय शशभृति चन्द्रे पुनः कीदृशे—दशमुखो रावण एव रिपुः तस्य कुलमेव तिमिरम् अन्धकारः तस्य हरे क्षयकारिणि। पुनः कीदृशे—विषधराः सर्पा इव विषमा ये विषयाः शब्दाद्याः तेषां विषहरं मोहक्षयकरं महस्तेजो यस्य तस्मिन्।

**भाषा**—जिस के चारों पाद एक २ गुरु अक्षरवाले हों उसका नाम "श्री" है॥

# अथ [ २ ] अत्युक्ता—

ऽ ऽ

**गौ स्त्री ॥ २ ॥**

यदि पादे द्वौ गुरू स्तः तदा "स्त्री" नाम छन्दोज्ञेयम्। अन्यदुदाहरणं यथा वा— "गोपस्त्रीभिः कृष्णोरेमे" इति ॥२॥

# अथ [ ३ ] मध्या—

मगणः

ऽ ऽ ऽ

सर्वगुर्मो **मो नारी ॥ ३ ॥**

यदि प्रतिपादमैकैको मगणो भवेत् तदा "नारी" इत्युच्यते। ( उ० ) यथा वा—

गोपानां नारीभिः। श्लिष्टोऽव्यात् कृष्णो वः" इति ॥ ३ ॥

**भाषा**—जिस के प्रत्येक पाद में एक २ मगण हो उसका नाम "नारी" होता है

रगणः

ऽ । ऽ

**रो मृगी ॥ ४ ॥**

रगणश्चेत् पादस्तदा "मृगी" नाम छन्दः।

**भाषा**—जिस के चारों पादो में एक २ रगण हो (अर्थात् एक२ रगण से ही जिस के एक पाद की पूर्त्ति हो जाय ) उस छन्द का नाम "मृगी" है। (उ०) यथा वा-

"सा मृगीलोचना। राधिका श्रीपतेः" इति ॥ ४ ॥

# अथ [ ४ ] प्रतिष्ठा—

म० गु० १

ऽ ऽऽऽ ऽ

**म्गौ चेत् कन्या ॥ ५ ॥**

यदि प्रतिपादं मगणगुरू अर्थात् चत्वारो गुरवः स्युः तत् "कन्या" नाम छन्दः।

**भाषा**—जिस के प्रत्येक पाद में एक २ मगण और एक २ गुरु हो (अर्थात् चार गुरुवर्णों से एक पाद बने ) उस छन्द को "कन्या" कथन करते हैं। ( उ० ) यथा वा-

"भास्वत्कन्या चैका धन्या। यस्याः कूले कृष्णोऽखेलत्"
भास्वत्कन्या=यमुनेत्यर्थः ॥ ५ ॥

## अथ [ ५ ] सुप्रतिष्ठा—

भ० गु० गु०

ऽ ।। ऽ ऽ

रमध्याद्धो ज्सौ । भ्गौ गिति पङ्क्तिः ॥ ६ ॥

यदि पूर्वं भगणः तत एकोगुरुः, पुनरेको गुरुः एवमेकः पादः पूर्येत, (तादृशाश्च चत्वारः पादा भवेयुः) तदा "पङ्क्ति"र्नाम छन्दः।

**भाषा**—जिस के प्रत्येक पाद में एक २ भगण तथा दो २ गुरु हों, वह "पङ्क्ति" छन्द जानाना। ( उ० ) यथा वा—

"कृष्णसनाथा * तर्णकपङ्क्तिः। †यामुनकच्छे चारु चचार" इति ॥६॥

## अथ [ ६ ] गायत्री—

त० य०

ऽ ऽ ।-। ऽ ऽ

अन्तगलो सतो, त्यौ स्तस्तनुमध्या ॥ ७ ॥

यदि एकस्मिन् पादे आदौ तगणः, ततो यगणः ( एवमेव सर्वे पादाः पूर्येरन् ) तदा "तनुमध्या" इत्युच्यते।

**भाषा**—यदि प्रत्येक पाद में एक २ तगण और एक २ यगण हो तो उसको "तनुमध्या" कहते हैं। ( उ० ) यथा वा—

ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ ऽ
मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा।
ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ ऽ
आस्तां मम चित्ते नित्यं तनुमध्या ॥

‡ नश्यन्ति ददर्श वृन्दानि कपीन्द्रः
हारीण्यबलानां हारीण्यबलानाम् । ( भट्टिकाव्यम् )

ददर्श " इत्यत्र पादान्तत्वेन गुरुत्वं ज्ञेयम् ॥

---

* कालिन्दीतीरे। "चारु" इति क्रियाविशेषणम् † वत्सानां राजिः।

‡ मिथुनयमकमिदं "भट्टौ" दशमे सर्गे—अबलानां=स्त्रीणाम्, अबलानाम्=अविद्यमानरक्षकाणां वृन्दानि=समूहान्। हारीणि = हारवन्ति, हारीणि = अवश्यं हरन्ति चेतस इति शेषः। आवश्यके णिनिः। नश्यन्ति = पलायमानानि सन्ति कपीन्द्रो = हनूमान् ददर्शेति सम्बन्धः।

न० य०

।। ।।ऽ ऽ

## शशिवदना न्यौ ॥ ८ ॥

यदि प्रतिपादं नगणयगणौ स्तः तदा—"शशिवदना" नाम छन्दः ।

**भाषा**—जिस के प्रत्येक पाद में एक २ नगण एक २ यगण हो तो उसका नाम "शशिवदना" है । (उ०) यथा वा—

। । । । ऽ ऽ । । । । । ऽ ऽ

*शशिवदनानां व्रजतरुणीनाम् ।

। । । । ऽ ऽ । । । । ऽ ऽ

अधरसुधोर्मिं मधुरिपुरैच्छत् ॥ ८ ॥

## विद्युल्लेखा मोमः ॥ ९ ॥

यदि प्रतिपादं मगणौ स्याताम्, तदा "विद्युल्लेखा" नाम ।

**भाषा**—जिस के प्रत्येक पाद में दो २ मगण हों तो उसका नाम "विद्युल्लेखा" जानना । यथा वा **ममैव**—

ऽ ऽ ऽ ऽ ऽ ऽ

"विद्युल्लेखा रामा, रम्या यूनां चित्ते ।

कामावेगं धत्ते, भ्रातर्नैतन्मिथ्या ॥ ९ ॥

त० स०

ऽ ऽ । - । । ऽ

## त्सौ चेद्वसुमती ॥ १० ॥

तगण-सगणौ चेत्पादः, "वसुमती" नाम सा । †

**भाषा**—यदि प्रत्येक पाद में एक २ तगण तथा एक २ सगण हो तो उस को "वसुमती" कहते हैं । (उ०) यथा वा **ममैव**—

---

* मधुरिपुः = श्रीकृष्णः । अधरसुधाया ऊर्मीं = लहरीं परम्परामिति यावत् । "ऊर्मीं" पदेन अधरसुधाया अनल्पता व्यज्यते ।

† एतस्यामेव षडक्षरायां जातौ क्वचित्—**स्याद्रौ स्रग्विणी । द्विया सोमराजी**, इत्यादीन्यपि सूत्राणि पठितानि । छन्दोमर्यां सोमराज्या (उ०) यथा वा—

।ऽ ऽ।ऽ ऽ

"हरे सोमराजी-समा ते यशः श्रीः ।

जगन्मण्डलस्य [illegible] ॥ इति ॥

ऽ ऽ ।।।ऽ ऽ ऽ ।।। ऽ

धन्या वसुमती कन्या भवति सा।

ऽ ऽ ।।। ऽ ऽ ऽ ।।ऽ

यस्या श्चरणगा रेखा पर-महा ॥१०॥ ष्णि

## अथ (७) उष्णिक्—

न० न० गु०

।। ।-। ।।-ऽ

### मधु यदि ननगाः ॥ ११ ॥

यदि प्रतिपादं द्वौ २ नगणौ एको गुरुश्च भवेत् तदा "मधु" नाम छन्दः। अस्यैव "मधुमती" इति सञ्ज्ञान्तरम्।

**भाषा**—यदि प्रत्येक पाद में दो २ नगण तथा एक २ गुरु हो तो उस को "मधु" वा "मधुमती" कहते हैं। (उ०) यथा वा—

रविदुहितृतटे वनकुसुमततिः।

व्यधित मधुमती मधुमथनमुदम् ॥ ११ ॥

म० स० गु०

ऽ ऽ ऽ ।।ऽ ऽ

### म्सौ गः स्यान्मदलेखा ॥ १२ ॥

मगण-सगण-गुरुभिः "मदलेखा" नाम।

**भाषा**—प्रत्येक पाद में एक मगण, एक सगण तथा एक गुरु हो तो उस को "मदलेखा" कहते हैं। (उ०) यथा वा—

ऽऽऽ।।ऽ ऽऽऽ ऽ ।।ऽऽ

रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा।

ऽ ऽ ऽ ।।ऽऽ ऽऽऽ।।ऽऽ

लग्नाऽभून्मुरशत्रौ कस्तूरीरसचर्चा ॥ १२ ॥

ज० स० गु०

।ऽ।-। ।ऽ- ऽ

### कुमार ललिता ज्सौ ग् ॥ १३ ॥

यदि ज्सौ=जगणसगणौ ग्=गुरुश्च पादः स्यात् तदा "कुमारललिता" इत्युच्यते

**भाषा**—यदि प्रत्येक पाद में एक जगण, एक सगण तथा एक गुरु हो तो उस को "कुमारललिता" कहते हैं। (उ०) यथा वा—

। S । । । S S । S । । । S S

* मुरारितनुवल्ली कुमारललिता सा ।
व्रजैणनयनानां ततानमुदमुच्चैः ॥१३॥

# अथ (८) अनुष्टुप्—

भ० भ० गु०

S । । – S । । – S S

**भौ गिति चित्रपदा गः ॥ १४ ॥**

**यत्र पादे भगणौ गुरू च स्याताम् ( इत्येवं चत्वारः पादाः स्युः ) सा " चित्रपदा " नाम । पादान्ते यतिः ।**

**भाषा**—जब प्रत्येक पाद में दो २ भगण तथा दो २ गुरु हों तो उस को " चित्रपदा " कहते हैं । ( उ० ) यथा वा—

S । । S । । S S

† यामुनसैकतदेशे गोपबधूजलकेलौ ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥१४॥

---

* मुरारिः=श्रीकृष्णः तस्य तनुः=शरीरमेव वल्ली=लता सा कुमारललिता=कुमारावस्थाहेतोर्मनोहरा व्रजैणनयनानां=व्रजवासिनीनां मृगाक्षीणाम् उच्चैः=अतिशयेन मुदम्=हर्षम् ततान=विस्तारयामास । कुमारं कृष्णं दृष्ट्वा व्रजसुन्दर्यो मुदं भेजिरे इत्यर्थः । यथा वा—

। S । । । S S

यदीयरतिभूमौ विभाति तिलकाङ्कः ।
कुमारललितासौ कुलान्यटति नारी ॥ इति ।

† **यामुनेति**—कंसरिपोः=श्रीकृष्णस्य चित्रपदा=अद्भुतचरणविन्यासा गतिलीला=भ्रमणविलासो जगत् अव्यादिति सम्बन्धः । यामुनसैकतदेशे = यमुनाया वालुकामये तट इत्यर्थः । गोपबधूभिः गोपाङ्गनाभिः सह जलकेलौ = जलक्रीडायाम् ॥ अन्यदप्युदाहरणम् यथा वा—

**यस्य मुखे प्रियवाणी चेतसि सज्जनता च ।**
**चित्रपदापि च लक्ष्मी-स्तं पुरुषं न जहाति ॥**

चित्रपदा = चपलस्वभावापीत्यर्थः । लक्ष्मीरिति कर्तृपदम् । अत्र " सज्जनता च " "जहाति" इत्युभयत्रापि पादान्तस्थत्वाल्लघुवर्णयोः गुरुत्वम् " गन्ते " (पिं० १।१०) इतिसूत्रमूलकत्वात् " वा पादान्ते " इति वचनाच्च । किञ्च—अष्टाक्षरप्रस्तारभेदानां मध्ये पञ्चपञ्चाशत्तमो ( ५५ ) भेदः " **चित्रपदा** " इति नाम्ना प्रसिद्धः ।

म० म० गु०२

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

मो मो गो गो विद्युन्माला ॥१५॥

यदि मो मः=द्वौ मगणौ, गो गः=द्वौ च गुरू स्याताम् ( एवं चतुर्भिः पादैः ) "विद्युन्माला" भवति चतुर्भिश्चतुर्भिश्चयतिरिति सम्प्रदायः। अष्टाक्षरप्रस्तारस्य सर्वगुर्वात्मकः प्रथमो भेदो "विद्युन्माला" इति नाम्ना प्रसिद्धः।

**भाषा**—दो मगण तथा दो गुरु हों तो उस को "विद्युन्माला" कहते हैं। ( छन्द की पूर्त्ति सर्वत्र चार पादों से जाननी ) ( उ० ) यथा वा—

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

* वासोवल्ली विद्युन्माला बर्हश्रेणी शाक्रश्चापः।
यस्मिन्नास्तां तापोच्छित्यै गोमध्यस्थः कृष्णाम्भोदः ॥

अथवा—विद्युन्मालालोलान् भोगान् मुक्त्वा मुक्तौ यत्नं कुर्यात्।
† ध्यानोत्पन्नं निःसामान्यं सौख्यं भोक्तुं यद्याकाङ्क्षेत् ॥१५॥

भ० त० ल०गु०

ऽ । ।ऽ ऽ । । ऽ

माणवकं भात्तलगाः ॥ १६ ॥

यदि भात्=भगणात् तलगाः=तगण-लघु-गुरवो भवेयुः तदा "माणवकम्" नाम छन्दः। "माणवकक्रीडितम्" इत्यस्यैव संज्ञा। यतिस्तु पूर्ववत् ४ भिः २ इति।

**भाषा**—यदि क्रम से भगण, तगण, एक लघु, एक गुरु हो तो उस को "माणवक" कहते हैं। ( उ० ) यथा वा—

‡ "पञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम्।
ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥ इति ॥ १६ ॥

---

* यस्मिन् वासोवल्ली = पीताम्बरलता विद्युन्माला = तडिद्राजिः, बर्हश्रेणी = मयूरपुच्छसमूहः शाक्रः = ऐन्द्रः चापः = धनुरस्ति सः कृष्णाम्भोदः = कृष्ण एव अम्भोदः = नूतनजलधरः सः तापोच्छित्यै = दुःखनिवारणाय आस्ताम्। कीदृशः— गोमध्यस्थः = गवां मध्ये स्थितः वेदप्रतिपाद्यश्च "धर्मब्रह्मणी वेदैकवेद्ये" इत्यभियुक्तोक्तेः।

† ध्यानोत्पन्नं निःसामान्यमिति धर्ममेघसमाधिसमुद्भूतम्। निर्बीजसमाधिज-मित्यन्ये। अत्र बहुवक्तव्यं, बालानुपयोगि मत्वा नोक्तम्।

‡ पञ्चला चपला चूडा शिखा यस्य तमित्यर्थः। एतस्य उदाहरणान्तरं यथा वा—

ऽ । । ऽ ऽ । । ऽ

माणवकक्रीडितकं यः कुरुते वृद्धवयाः
हास्य मसौ याति जने भिक्षुरिव स्त्रीचपलः ॥

म० । न० गु०२

ऽ ऽ ऽ।।।ऽ-ऽ

म्नौ गौ हंसरुतमेतत् ॥ १७ ॥

यदि म्नौ=मगणनगणौ गौ=द्वौ च गुरू पादः स्यात्, तत् "हंसरुतं" नाम छन्दः।

भाषा— *( क्रम से ) एक मगण, एक नगण, दो गुरु होंतो उसका नाम " हंसरुत " जानना। ( उ० ) यथा वा—

ऽ ऽऽ।।।ऽऽ

*अभ्यागामिशणलक्ष्मी-मञ्जीरक्कणिततुल्यम्।
तीरे राजति नदीनां रम्यं हंसरुतमेतत् ॥ १७ ॥

र० ज० गु० ल०

ऽ।ऽ-।ऽ।ऽ-।

र्जौ समानिका गलौ च ॥ १८ ॥

र्जौ=रगण-जकारौ गलौ=गुरुलघू च पादः "समानिका" नाम तत्।

भाषा—यदि एक रगण, एक जगण, एक गुरु, एक लघु हो तो उस छन्द का नाम "सामानिका" है। ( उ०) यथा वा—

† यस्य कृष्णपादपद्म-मस्ति हृत्तडागसद्म।
धीः समानिका परेण नोचितात्र मत्सरेण ॥ १८ ॥

---

* अभ्यागामीति—एतत् रम्यं हंसरुतं नदीनां तीरे राजति इति सम्बन्धः। कीदृशं तत—अभ्यागामिशणलक्ष्मीः-मञ्जीरक्कणिततुल्यम् = अभ्यागामिनी सर्वतः सम्यक् व्यापनशीला या शणलक्ष्मी, मञ्जीरक्कणितम् नूपुरशब्दः तयोस्तुल्यम्। आर्थीयमुपमा।

† अत्र = संसारे यस्य = हरिभक्तस्य कृष्णपादपद्मम् अस्ति। कीदृशं तत्। हृत्तडागसद्म = हृद् हृदयमेव तडागः सद्म स्थानम् अर्थात् यस्य हृदयं सर्वदैव हरिचरणं ध्यायति। तस्य धीः = बुद्धिः परेण समानिना = परस्मिन्नपि साम्यं भजते " आत्मवत् सर्वभूतेषु " इति स्मृतेः। कथंभूता धीः। मत्सरेण = मात्सर्यादिदोषेण नो = नैव चिता= व्याप्ता। भगवद्भावभाजो जीवन्मुक्ताश्चरन्तीति परः सारः।

वासवोऽपि विक्रमेण यत्समानतां न याति।
तस्य वल्लवेश्वरस्य केन तुल्यता क्रियेत ॥
ॐ नमो जनार्दनाय पापसङ्घमोचनाय।
दुष्टदैत्यमर्दनाय पुण्डरीकलोचनाय ॥

इत्याद्यपि समानिका ॥

ज० र० ल० गु०

। ऽ ।-ऽ । ऽ— ।-ऽ

प्रमाणिका जरौ लगौ ॥ १९ ॥

यदि जरौ=जगण-रगणौ लगौ=लघु-गुरू च स्याताम् तदा "प्रमाणिका" नाम भवति।

भाषा—एक जगण, एक रगण, एक लघु, एक गुरु हो तो "प्रमाणिका" कहते हैं। (उ०) यथा वा—

पुनातु भक्तिरच्युता * सदाच्युताङ्घ्रिपद्मयोः।
श्रुतिस्मृति ¶ प्रमाणिका भवाम्बुराशितारिका।

किंवा—सरोजयोनिरम्बरे रसातले तथाच्युतः।
तव प्रमाणमीक्षितुं क्षमौ न तौ बभूवतुः ॥१९॥

ज० त० गु०

। ऽ ।-ऽ ऽ- । ऽ-ऽ

वितानमाभ्यां यदन्यत् ॥ २० ॥

आभ्याम्=समानिकाप्रमाणिकाभ्यां यदन्यत्=अनुष्टुब्जातीयं छन्दो तत् "वितान" मित्युच्यते। प्रायिकमिदं न नियम इति केचित्।

भाषा—अनुष्टुप् जाति में समानिका प्रमाणिका से अन्य (शेष) छन्द को "वितान" कहते हैं। (उ०) यथा वा—

हृदयं यस्य विशालं गगनाभोगसमानम्।
लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानाम् ‡ ॥ २० ॥

---

* अच्युताङ्घ्रिपद्मयोः = श्रीकृष्णचरणारविन्दयोः भक्तिरिति सम्बन्धः।

¶ इयं श्रुतबोधे "नगस्वरूपिणी" इत्युच्यते—

द्वितुर्यषष्ठमष्टमं गुरुप्रयोजितं यदा।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ इति।

‡ घोषकृते छन्दःसारसङ्ग्रहे तु—

तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु।
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥

कङ्कालमालभारिणं कन्दर्पदर्पहारिणम्।
संसारबन्धमोचनं वन्दामहे त्रिलोचनम् ॥

तस्याः स्मरामि सुन्दरं चन्दोपमानमाननम्।
कन्दर्पचापभङ्गुर-भ्रू-विभ्रमोपशोभितम् ॥

इत्याद्युदाहरणान्तरमपि हलायुधवृत्तौ सङ्गृहीतम् ॥

## अथ [ ६ ] बृहती—

र० न० स०

ऽ।ऽ।। ।।।ऽ

**रान्नसाविह हलमुखी ॥ २१ ॥**

रात्=रगणात् अनन्तरं नसौ=नगणसगणौ स्यातां चेत्, इह=छन्दःशास्त्रे "हलमुखी" सेत्युच्यते। अत्र त्रिभिः षड्भिश्च यति रित्यम्नायः।

**भाषा**—यदि रगण, नगण, सगण हो तो उस को ( नवाक्षरा जाति में ) "हलमुखी" कहते हैं। ( उ० ) यथा वा—

गण्डयो रतिशयकृशं यन्मुखं प्रकटदशनम्।
आयतं कलहनिरतं तां स्त्रियं त्यज हलमुखीम्" * ॥ २१ ॥

न० न० म०

।।।।।।-ऽ ऽ ऽ

**भुजगशिशुभृता नौ मः ॥ २२ ॥**

नौ=द्वौ नगणौ, मः=एकश्च मगणश्चेत्, "भुजगशिशुभृता" नाम छन्दः। सप्तभिर्द्वाभ्यां च यतिरिति सम्प्रदायः।

**भाषा**—दो नगण, एक मगण हो तो उस का नाम "भुजगशिशुभृता" जानना। ( उ० ) यथा वा—

ह्रदतट निकटक्षोणी भुजगशिशुभृता यासीत्।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ¶ ॥ २२ ॥

## अथ ( १० ) पङ्क्तिः—

म० स० ज० गु०

ऽ ऽ ऽ-।।ऽ।ऽ।-ऽ

**म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ २३ ॥**

---

* यथा वा **ममैव**—
का गुहा वद वरमते ! श्रूयतां, बुध ! निगमतः
निश्चितं मतमिह हि सा स्वात्मचिन्तनपरमतिः ॥

¶ इयमधिकतरं रम्या विकचकुवलयश्यामा।
रमयति हृदयं यूनां भुजगशिशुसृता नारी ॥
भुजगशिशुसृता इति पाठान्तरम्

म्सौ=मगण=सगणौ, ज्गौ=एको जगणः, एकश्च गुरुरिति चेत् तत् इदम्=छन्दः "शुद्धविराट्" इति मतम्। पादान्ते यतिः।

भाषा—एक मगण, एक सगण, एक जगण एक गुरु हो तो उस का नाम (दशाक्षरा जाति में) "शुद्धविराट्" होता है। (उ०) यथा वा—

ऽ ऽ ऽ । । ऽ । । ऽ ऽ

विश्वं तिष्ठति कुक्षिकोटरे, वक्त्रे यस्य सरस्वती सदा।
अस्मद्वंशपितामहो गुरुर्ब्रह्मा शुद्धविराट् पुनातु नः॥ २३॥

म०  न०  य० गु०

ऽ ऽ ऽ-। । ।-ऽ ऽ-ऽ

म्नौ य्गौ चेति पणवनामेदम्॥ २४॥

म्नौ=यदि मगणः, ततो नगणः, य्गौ=ततो यगणः एको गुरुश्च तदा "पणवनाम (कम्)" तदुच्यते। पञ्चभिश्च २ यतिः।

भाषा—एक मगण, एक जगण और एक गुरु हो तो उसको "पणवनाम (क)" जानना। (उ०) यथा वा—

मीमांसारस, मम्रृतं पीत्वा, शास्त्रोक्तिःपटु, रितरा भाति।
एवं संसदि, विदुषां मध्ये, जल्पामो जय, पणबन्धत्वात्॥ इति ॥२४॥

र०  ज०  र०  गु०

ऽ । ऽ । ऽ । ऽ । ऽ  ऽ

जौं रगौ मयूरसारिणी स्यात्॥ २५॥

जौं=रगणजगणौ, रगौ=रगणगुरू चेत् "मयूरसारिणी" नाम स्यात्। पादान्ते यतिः।

भाषा—यदि रगण, जगण, पुनः एक रगण और एक गुरु वर्ण हो तो वह "मयूरसारिणी" नाम छन्द होता है। (उ०) यथा वा—

ऽ । ऽ । ऽ । ऽ । ऽ ऽ

या वनान्तराण्यु पैति रन्तुं, या * भुजङ्गभोगसक्तचित्ता।
या द्रुतं प्रयाति सन्नतांसा, तां मयूरसारिणीं विजह्यात्॥२५॥

भ०  म०  स० गु०

ऽ । ।-ऽ ऽ ऽ-। । ऽ ऽ

भ्मौ सगयुक्तौ रुक्मवतीयम्॥ २६॥

---

* भुजङ्गो विटः तद्भोगे सक्तं खचितं चित्तं यस्याः सा "भुजङ्गो विट्सर्पयो" रिति कोषः।

यदि पूर्वं भगणः, ततो मगणः, ततः सगणः पुनरेको गुरुः स्यात् सेयं "रुक्मवती" इत्युच्यते। यतिः पादान्त एव। (उ०) यथा वा–

कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य *॥

इयमेव—"चम्पकमाला" इत्यपि कथ्यते। २६॥

भ० म० स० गु०

ऽ ।।–ऽ ऽ ऽ–। ऽ– ऽ

चम्पकमाला चेद्भमसाद्गः॥

म० भ० स० गु०

ऽऽ ऽ–ऽ ।।–।। ऽ–ऽ

ज्ञेया मत्ता मभसगयुक्ता॥२७॥

मभसगयुक्ता=पूर्वं मगणः, ततो भगणः, ततः सगणः एको गुरुश्चेत् "मत्ता" नाम ज्ञेया। चतुर्भिः षड्भिश्च यतिः॥

भाषा—मगण, भगण, सगण और अन्त में एक गुरु हो तो उसका नाम "मत्ता" जानना। (उ०) यथा वा—

ऽऽ ऽऽ।।।।ऽऽ

‡ पीत्वा मत्ता मधु मधुपाली, कालिन्दीये तटवनकुञ्जे।
उद्दीव्यन्ती, व्रंजजनरामाः कामासक्ता, मधुजिति चक्रे॥२७॥

न० र० ज० गु०

।।।ऽ।ऽ–।ऽ।–ऽ

नरजगैर्भवेन्मनोरमा॥२८॥

न–र–जगण–गुरुभिः "मनोरमा" ज्ञेया। पादान्ते यतिः।

भाषा—नगण, रगण, जगण और एक गुरु हो तो वह "मनोरमा" नाम छन्द होता है॥ (उ०) यथा वा—

---

* अन्यदुदाहरणं यथा वा—

पादतले पद्मोदरगौरे राजति यस्या ऊर्ध्वगरेखा।
सा भवति स्त्री लक्षणयुक्ता, रुक्मवती सौभाग्यवती च॥

‡ मधुपाली=( कर्त्री ) भ्रमरमाला मधु=पौष्पं रजो मद्यञ्च पीत्वा कालिन्दीये=यामुने तटवनकुञ्जे=तीरवर्त्तिलतापिहितद्वारे उद्दीव्यन्ति=क्रीडासक्ताः व्रजजनरामाः=गोपसुन्दरीः मधुजिति=मधुसूदने श्रीकृष्णे कामासक्ताः चक्रे॥ अन्यदुदाहरणं यथा—

स्वैरोल्लापैः श्रुतिपुटपेयै गीतक्रीडा–सुरतविशेषैः।
वासागारे कृतसुरतानां मत्ता नारी रमयति चेतः॥

।।।ऽ।ऽ।ऽ।ऽ

तरणिजातटे विहारिणी व्रजविलासिनीविलासतः ।
मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥ २८ ॥

त० ज० ज० गु०

ऽ ऽ ।–।ऽ ।–।ऽ ।–ऽ–

**त्जौ जो गुरुणेयमुपस्थिता ॥२९॥**

त्जौ=तगणजगणौ, जः=पुनरेको जगणः गुरुणा=एकेन गुरुणा सह चेदेते तदा सा " उपस्थिता " नाम ज्ञेया ॥ पादे यतिः द्वाभ्यामष्टभिश्चेत्येके ।

भाषा—तगण, जगण, पुनः जगण और अन्त में एक गुरु हो तो वह " उपस्थिता " नाम छन्द होता है । ( उ० ) यथा वा—

एषा जगदेकमनोहरा, कन्या * कनकोज्ज्वलदीधितिः ।
लक्ष्मीरिव दानवसदनं पुण्यैर्नरनाथमुपस्थिता ॥

छन्दोमञ्जर्यां त्वरितगतिरपि लक्षिता । "त्वरितगतिश्च नजनगः" इति । नगणः, जगणः, पुनर्नगणः अन्ते एको गुरुश्चेत् " त्वरितगतिः " इति सोच्यते । उदाहृतञ्च काव्यादर्शस्थेन दण्डिकाव्येन–

क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥

व्याख्यातश्चैतदस्माभिः काव्यादर्शस्य **कुसुमप्रतिमायाम्** इति तत्रैव कण्ठहत्य निरीक्षणीयम् ॥२९॥

## अथ (११) त्रिष्टुप् ।

त० त० ज० गु०गु०

ऽऽ ।–ऽऽ ।–ऽ ऽ ।–ऽ–ऽ

**स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥३०॥**

यदि तौ=द्वौ तगणौ, जगौ=ततो जगणगुरू गः=पुनरेकोगुरुश्चेत् सा " इन्द्रवज्रा " नाम ।

भाषा—दो तगण, एक जगण और दो गुरु हों तो उस को " इन्द्रवज्रा " कहते हैं । ( उ० ) यथा वा—

* गौरवर्णेत्यर्थः । नरनाथमुपस्थिता=राज्ञी जातेत्यर्थः ॥

त त ज गु
ऽऽ।ऽऽ।।ऽ।ऽऽ शूरः सुरूपः सुभगश्च वाग्मी,

* गोष्ठे गिरिं सव्यकरेण धृत्वा शस्त्राणि शास्त्राणि विदांकरोति।
रुष्टेन्द्रवज्राहति-मुक्तवृष्टौ । अर्थं विना नैव यशश्च मानं,
यो गोकुलं गोपकुलञ्च सुस्थं प्राप्नोति मर्त्योऽत्र मनुष्यलोके ॥
चक्रे स नो रक्षतु चक्रपाणिः ॥ ३० ॥

ज० त० ज० गु०

।ऽ।-ऽऽ।-।।ऽ।-ऽऽ

उपेन्द्रवज्रा जतजास्ततो गौ ॥३१॥

यदि जतजाः=जगण-तगण-जगणाः स्युः, ततो गौ=द्वौ च गुरू स्याताम् तदा "उपेन्द्रवज्रा" नाम छन्द उच्यते ॥

**भाषा**—(क्रम से) जगण, तगण, जगण के अनन्तर दो गुरु हों तो उसका नाम "उपेन्द्रवज्रा" है (उ०) यथा वा—

---

* "गोष्ठ" इति । रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ=रुष्टः स्वयजनप्रतिरोधात् कुपितो य इन्द्रः=ऐश्वर्यवान् सुरपतिः तस्य वज्रेण अशनिना आहतिः आघातः तया मुक्ता चासौ वृष्टिः तस्यां धारारूपायां वृष्टौ सत्यामित्यर्थः । सव्यकरेण=वामकरेण "सव्यं दक्षिणवामयोः" इत्यमरः । गिरिम्=गोवर्धनं धृत्वा = उत्तोल्य यः गोकुलं गोपकुलञ्च सुस्थं=सुखि निरापदमित्यर्थः चक्रे स चक्रपाणिः=विष्णुरेव कृष्णरूपेणावतीर्णः नः=अस्मान् रक्षतु=अवतु सकलापद्भ्य इति शेषः । किञ्च—(षट्पञ्चाशिकयाम्)

त त ज गु
ऽऽ।ऽऽ।।ऽ।ऽऽ ऽऽ।

पूर्णः शशी लग्नगतः शुभो वा दो तगण
शीर्षोदये सौम्यनिरीक्षितश्च । एक जगण ।ऽ।
नष्टस्य लाभं कुरुते तदाशु दो गुरु .
लाभोपयातो बलवाञ्छुभश्च ॥

इदमपि "इन्द्रवज्रा" नाम । द्वितीय- तृतीय—चतुर्थपादान्ते यथाक्रमं "च—शु—च" इत्येते "वा पादान्ते" इत्युक्त्या लघवोऽपि गुरुकृत्यकर्त्तारः । अन्यच्च—

गोब्राह्मणस्त्रीव्रतिभिर्विरुद्धं
मोहात्करोत्यल्पमतिर्नृपो यः ।
तस्येन्द्रवज्राभिहतस्य पातः
क्षौणीधरस्येव भवत्यवश्यम् ॥

उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते ।
स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थ ॥*

ज० त० ज० गु०२ त० त० ज० गु०२

।ऽ ।-ऽऽ।।ऽ ।-ऽ ऽ-ऽ ऽ।-ऽऽ ।-।ऽ।-ऽ ऽ

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥

अनयोरुपजातिमाह—अनन्तरो० इति । अनन्तरमव्यवहितम् उदीरिते उक्ते ये लक्ष्मणी लक्षणे ते भजत इति तौ एवम्भूतौ यदीयौ यत्सम्बन्धिनौ पादौ अर्थात् एकः पादः इन्द्रवज्राया एकाद्वितीयोपेन्द्रवज्रायाः, ता " उपजातयो " नाम मताः ।

इदन्तु बोध्यम्—लक्षणद्वयपादकथनेन न द्वयोरेव पादयोर्मेलने सति उपजातिः । किन्तु—यथायोगमेकद्व्यादिवारावृत्तिर्विवक्षिता नतु द्वाभ्यामेव वृत्तपूर्त्तिः । एताश्चतुरक्षरप्रस्तारवत्प्रस्तारे सति आद्यन्तयोर्भेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रयोस्त्यागात् चतुर्दश भेदा भवन्ति । तथाहि—

| | | |
|---|---|---|
| इ इ इ इ | ( इन्द्रवज्रा | |
| उ इ इ इ | ( कीर्त्तिः ) | १ |
| इ उ इ इ | ( वाणी ) | २ |
| उ उ इ इ | ( माला ) | ३ |
| इ इ उ इ | ( शाला ) | ४ |
| उ इ उ इ | ( हंसी ) | ५ |
| इ उ उ इ | ( माया ) | ६ |
| उ उ उ इ | ( जाया ) | ७ |
| इ इ इ उ | ( बाला ) | ८ |
| उ इ इ उ | ( आर्द्रा ) | ९ |
| इ उ इ उ | ( भद्रा ) | १० |
| उ उ इ उ | ~~(रामा)~~ प्रेमा | ११ |
| इ इ उ उ | रामा | १२ |

* अन्यदपि—( उपेन्द्रवज्रोदाहरणम् )

।ऽ।ऽ ऽ।।ऽ।ऽऽ

भवन्नखाः कुन्ददलश्रियो ये
नमन्ति लक्ष्मीस्तनलेखनेऽपि ।
उपेन्द्रवज्राधिककर्कशत्वं
कथं गतास्ते रिपुदारणाय ॥

उ इ उ उ ( ऋद्धिः ) १३

इ उ उ उ ( बुद्धिः ) १४

उ उ उ उ ( उपेन्द्रवज्रा )

उक्तञ्च वृद्धैः—

एकत्र पादे चरणद्वये वा

पादत्रये वाऽन्यतरः स्थितश्चेत् ।

तयोरिहान्यत्र तथोहनीया—

श्चतुर्दशोक्ता उपजातिभेदाः ॥ इति ।

**भाषा**—जिस में उक्त "इन्द्रवज्रा" और "उपेन्द्रवज्रा" का लक्षण मिला हो उसका नाम "**उपजाति**" छन्द है। ( उ० ) यथा वा—

( इं ) काचिन्मुरारेर्वदनारविन्दं

( उ० ) संक्रान्तमालोक्य जले नवोढा ।

( इं ) व्यक्तं सलज्जा परिचुम्बितुं तत्-

( उ० ) तदर्थमेवाम्भसि निर्ममज्ज ॥ ( अच्युतचरिते )

इत्येवमस्याश्चतुर्दश भेदाः प्रायो महाकाव्येषु सन्तो ज्ञेयाः ॥३१॥

**इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥३२**

**उपजातिलक्षणमन्यत्राप्यातिदिशति—इत्थमिति । अन्यासु-अपि=जगत्यादिजातिषु इन्द्रवंशावंशस्थादीनाम् इत्थम्=अमुनैव प्रकारेण मिश्रितासु=मिलितासु इदमेव "उपजाति" * रिति नाम स्मरन्ति वृद्धा इति शेषः ।**

---

* अत्रेकारवकाराभ्यां पूर्ववत् प्रस्तारो विधेयः । अत्र गुरुस्थानीय इकारो लघु-स्थानीयो वकारः । एवमन्यत्राप्युन्नेयम् । **किञ्च**—यथा समाक्षरपादवृत्तद्वयामिश्रणे उपजाति र्भवति तथा विषमाक्षरपादवृत्तद्वयत्रयादिमिश्रणेऽप्युपजातिर्भवति । तत्र—वंशस्थोपेन्द्रवज्रामिश्रितोपजातेः ( विषमोपजातिः ) उदाहरणं "वाल्मीकीयरामायणे" सुन्दर काण्डे यथा—

**नमोऽस्तुवाचस्पतये सचक्रिणे**

**स्वयम्भुवे चापि हुताशनाय ।**

**अनेन चोक्तं यदिदं ममाग्रतो**

**वनौकसां तच्च तथास्तु नान्यथा ॥**

अत्र "स्वयम्भुवे"—इति द्वितीयपाद उपेन्द्रवज्रायाः अन्ये त्रयः पादा वंशस्थस्य । **महाभारते** तु—एवंविधा नानाच्छन्दसां नानोपजातयः समुपलभ्यन्ते । इन्द्रवंशावंशस्थमिश्रिताया उपजातेरुदाहरणं **श्रीभागवते** दशमस्कन्धे द्वादशाध्यायेऽघासुरप्रकरणे यथा—

भाषा—उक्त रीति के अनुसार जगती आदि जाति के इन्द्रवंशा-उपेन्द्रवंशादि छन्दों का मिलान करने से अन्य "उपजाति" छन्द भी जान लेने। ऐसा आचार्यों का कथन है। (उ०) यथा—इन्द्रवंशावंशस्थयोर्योगेन—

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः।
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम्॥ इति।

यथा च समवृत्तानामुपजातयः, एवं विषमवृत्तानामपीति न विस्मरणीयम्॥३२॥

न० ज० ज० ल०गु०

।। ।-।ऽ।-। ऽ ऽ-।-ऽ

**नजजलगैर्गदिता सुमुखी ॥३३॥**

**नजजलगैः=अर्थात् आदौ नगणः, ततो जगणौ, तत एको लघुः, अथ एको गुरुः स्यात्, सा "सुमुखी" इत्युच्यते। पञ्चभिः षड्भिश्च यतिरितिसम्प्रदायः। (उ०) यथा वा—**

* तरणिसुता, तटकुञ्जगृहे
वदनविधु, स्मितदीधितिभिः।
तिमिरमुद, स्य मुखं सुमुखी
हरिमवलो,क्य चुचुम्ब चिरम्॥ ३३॥

भ० भ० भ० गु०२

ऽ।।-ऽ।।-ऽ।।-ऽ ऽ

**दोधकवृत्तमिदं भभभाद्गौ ॥३४॥**

---

तावत्प्रविष्टास्त्वसुरोदरान्तरे
परं न गीर्णाः शिशवः सवत्साः।
प्रतीक्षमाणेन बकारिवेशनं
हत-स्वकान्तस्मरणेन रक्षसा॥

इन्द्रवज्रेन्द्रवंशोपेन्द्रवज्रावंशस्थमिश्रिताया उपजातेरुदाहरणं **प्रबोधचन्द्रोदये** यथा—"विद्याप्रबोधोदयजन्मभूमिः" इत्यादि। ये तु-समाक्षरजातिमिश्रणमेवोपजातित्वमिति वदन्ति ते न युक्तभाषिण इति भ्रमः। प्रपञ्चस्तु ग्रन्थान्तरेभ्यो विशिष्टगुरोः सकाशादवगन्तव्यः। इह ग्रन्थगौरवं नाद्रियामहे।

* तरणिसुतेति—तरणिसुताया यमुनायाः तटकुञ्जगृहे लताप्रतानद्वारि वदनमेवाविधुः चन्द्रः इति रूपकम् तस्य स्मितं हास्यं तद्रूपैः दीधितिभिः किरणैः तिमिरम्=अन्धकारम् उदस्य=वारयित्वा हरिमवलोक्य सुमुखी चिरं मुखं चुचुम्बेति सम्बन्धः।

भभभात्=भगणत्रयात् ऊर्ध्वं गौ=(द्वौ) गुरू स्यातां चेत् इदं "दोधकवृत्तम्" नाम भवति। पादान्ते यतिः।

**भाषा**—तीन भगणों के अनन्तर दो गुरु हों तो उसका नाम "दोधकवृत्त" जानना। (उ०) यथा वा—

देव! सदोध! कदम्बतलस्थ!
श्रीधर! * तावकनामपदं मे
कण्ठतलेऽसुविनिर्गमकाले
स्वल्पमपि क्षणमेष्यति योगम्॥ ३४॥

म० त० त० गु०गु०

ऽ ऽ ऽ–ऽ ऽ ।–ऽ ऽ ।–ऽ ऽ

## शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः॥३५॥

म्तौ=मगणः तगणश्च, तगौ=तगणः, गुरुश्च गः=पुनरप्येको गुरुः अर्थात् म–त=तानामुत्तरं गुरुद्वयश्चेत् तदा "शालिनी" नाम छन्द उक्तम्। अब्धिलोकैः=चतुर्भिः सप्तभिश्च यतिरिति शेषः।

**भाषा**—एक मगण, दो तगण, दो गुरु हों तो उसका नाम "शालिनी" होता है। इस की यति चार तथा सात पर जाननी। (उ०) यथा वा—

---

* असुविनिर्गमकाले मे कण्ठतले तावकनामपदं स्वल्पमपि क्षणं योगमेष्यति इति सम्बन्धः देवेति सम्बोधनम्। "सदोध" इत्यादीनि तस्य विशेषणानि दोहनं=दोधः तेन सह वर्त्तत इति सदोधः तत्सम्बुद्धौ, हे गोपेत्यर्थः। दोधकस्य अन्यदप्युदाहरणं यथा—

ऽ। ऽ।।ऽ।।ऽऽ
दोधकमर्थविरोधकमुग्रं
स्त्रीचपलं युधि कातरचित्तम्।
स्वार्थपरं मतिहीनममात्यं
मुञ्चति यो नृपतिः स सुखी स्यात्॥

दोधकम्=केनाप्युपायेन राजानं दोग्धीति दोधकः, तम्, उत्कोचादिहरणेऽपि यो निर्भयस्तमित्यर्थः। सर्वाणि द्वितीयान्तानि "अमात्यम्" इत्यस्य विशेषणानि॥ छन्दोमञ्जर्यां "स्यान्मोटनकं तजजाश्चलगौ"। इत्यप्युक्तम् उदाहृतञ्च—

ऽऽ।। ऽ।।ऽ।।ऽ
रङ्गे खलु मल्लकलाकुशल-
श्चाणूरमहाभटमोटनकम्।
यः केलिलवेन चकार स मे
संसाररिपुं परिमोटयतु॥

अंहो हन्ति, ज्ञानवृद्धिं विधत्ते
धर्मं दत्ते, काममर्थञ्च सूते।
मुक्तिं दत्ते, सर्वदोपास्यमाना
पुंसां श्रद्धा,-शालिनी विष्णुभक्तिः * ॥ ३५ ॥

म० भ० त० गु०गु०

ऽ ऽ ऽ-ऽ । । ऽ ऽ ।-ऽ—ऽ

वातोर्मीयं गदिता म्भौ तगौ गः ॥३६॥

म्भौ=मगणः भगणश्च, तगौ=तगणः गुरुश्च, गः=पुनरप्येको-गुरुश्चेत्, इयम् "वातोर्मी" उच्यते। यतिः शालिनीवत्।

**भाषा**—यदि मगण, भगण, तगण अन्त में दो गुरु हों तो उसको "वातोर्मी" कहते हैं॥ (उदा०) यथा वा—

ध्याता मूर्तिः क्षणमप्यच्युतस्य
श्रेणी नाम्नां गदिता हेलयापि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां
वातोर्मी पोतमिवाम्भोधिमध्ये॥ इति। यथा वा—

† यात्युत्सेकं सपदि प्राप्य किञ्चित्
स्याद्वा यस्या श्चपला चित्तवृत्तिः।
या दीर्घाङ्गी, स्फुटशब्दाट्टहासा
त्याज्या सा स्त्री द्रुतवातोर्मिमाला॥३६॥

---

* किंवा—वराहमिहिरात्मज-**पृथुयशो**विरचितायां षट्पञ्चाशिकायाम्—

यो यो भावः स्वामिदृष्टोयुतो वा
सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः।
पापैरेवं तस्य भावस्य हानि-
र्निर्देष्टव्या पृच्छतां जन्मतो वा॥ इति।

बुधो, वृहस्पतिः, शुक्रः, शुक्लपक्षीयश्चन्द्रश्चैते सौम्यग्रहाः। क्षीणश्चन्द्रः, सूर्यो, भौमः, शनैश्चरो, राहुः, केतु रित्येते पापग्रहाः। अथवा—

शस्त्रश्यामा, स्निग्धमुग्धायताक्षी
पीनश्रोणी दक्षिणावर्त्तनाभिः।
मध्ये क्षामा पीवरोरुस्तनी या
श्लाघ्या भर्त्तुः शालिनी कामिनी स्यात्॥

† उत्सेकम्=अहङ्कारम्।

भ० त० न० गु०२

ऽ।। ऽ ऽ।। ।।-ऽ ऽ

**पञ्चरसैः श्रीर्भतनगगैः स्यात् ॥३७॥**

**भतनगगैः=भगण-तगण-नगणैः द्वाभ्यां गुरुभ्याञ्च "श्रीः" नाम छन्दः। पञ्चरसैः=पञ्चभिः षड्भिश्च यतिः।**

**भाषा**—भगण, तगण, नगण और दो गुरु होने पर "श्री" नाम छन्द कहाता है। (उ०) यथा वा—**ममैव**

ऽ।। ऽऽ ।।।।ऽऽ

* मा कुरु चित्तं शठजनवित्तं
कल्मषगामी सरति हि नित्यम्।
वाञ्छसि चेत्त्वं परमपदाप्तिं
शङ्करपादं भज सुखपत्तिम् ॥ ३७ ॥

म० भ० न० ल०गु०

ऽ ऽ ऽ—ऽ ।-। । !-। ऽ

**म्भौ न्लौ गः स्याद् भ्रमरविलसिता ॥३८॥**

**म्भौ=मगणभगणौ, न्लौ=नगणलघू गः=अन्ते गुरुश्चैकश्चेत् सा "भ्रमरविलसिता" इत्युच्यते। चतुर्भिः, सप्तभिश्च यतिरित्याम्नायः॥**

**भाषा**—मगण, भगण, नगण एक लघु और एक गुरु हो तो उसको "भ्रमरविलसिता" कहते हैं। (उ०) यथा वा—

ऽऽ ऽऽ ।।।। ।।ऽ

मुग्धे मानं परिहर न चिरात्
तारुण्यं ते सफलयतु हरिः।
पुल्लावल्ली भ्रमरविलसिताऽ-
भावे शोभां कलयति किमु ताम् ॥ अथवा—

† किन्ते वक्त्रं चलदलकचितं

---

* कल्मषगामी=पापाचारीत्यर्थः "जन" इति शेषः। नित्यं सरति=जन्ममरणसन्तानपाती भवतीत्यर्थः॥ परमपदाप्तिम्=शिवभावं मोक्षमिति यावत्॥ सुखपत्तिम्=सुखहेतुमित्यर्थः।

† "किन्ते" इति। वक्त्रं, पद्मं वा कर्तृपदम्। प्रीतिं जनयतीति सम्बन्धः। कान्ते—मनोहरे परिसरसरसि—प्रान्तभूमिसरोवरे। अथवा कान्ते—वल्लभे प्रीतिं जनयति तादृशसरोवरस्योद्दीपनविभावत्वात्। "कान्ते" इति विषये सप्तमी।

" नाम छन्द कहाता

भ० त० न० गु०२

ऽ।। ऽ ऽ।।।।–ऽ ऽ

पञ्चरसैः श्रीर्भतनगगैः स्यात् ॥३७॥

भतनगगैः=भगण–तगण–नगणैः द्वाभ्यां गुरु

नाम छन्दः। पञ्चरसैः=पञ्चभिः षड्भिश्च यतिः।

**भाषा**—भगण, तगण, नगण और दो गुरु होने प

कहाता है। ( उ० ) यथा वा–ममैव

ऽ।। ऽऽ ।।।।ऽऽ

※ मा कुरु चित्तं शठजनवित्तं
कल्मषगामी सरति हि नित्यम्। ...न रगणेन, एकेन
वाञ्छसि चेत्त्वं परमपदाप्तिं ...यति। पादे यतिः।
शङ्करपादं भज सुखपत्तिम् ॥ ३७ ...ौर एक गुरु हो तो उसको

म० भ० न० ल०

ऽ ऽ ऽ–ऽ ।–। । !–

म्भौ न्लौ गः स्याद् भ्रमरवि...

म्भौ=मगणभगणौ, न्लौ=नगणलघू ...

सा " भ्रमरविलसिता " इत्युच्यते। चतु...

रित्याम्नायः॥

**भाषा**—मगण, भगण, नगण एक लघु और एक ग...

रविलसिता " कहते हैं। ( उ० ) यथा वा–

ऽऽ ऽऽ ।।।। ।।ऽ

मुग्धे मानं परिहर न चिरात्
तारुण्यं ते सफलयतु हरिः। ...र्थात् एको रगणः,
पुन्नावल्ली भ्रमरविलसिताऽ– ...निका" इत्युच्यते।
भावे शोभां कलयति किमु ताम्॥
† किन्ते वक्त्रं चलदलकचितं ...वनी सदा।

...म्यमच्युतम् ※ ॥४३॥

* कल्मषगामी=पापाचारीत्यर्थः " जन " इति ...
मरणसन्तानपाती भवतीत्यर्थः॥ परमपदाप्तिम्=शिवभावं मो...
सुखहेतुमित्यर्थः।

† " किन्ते " इति। वक्त्रं, पद्मं वा कर्तृपदम्।
कान्ते–मनोहरे परिसरसरसि–प्रान्तभूमिसरोवरे। अथवा व...
तादृशसरोवरस्योद्दीपनविभावत्वात्। " कान्ते " इति विषये...

ऽ।।ऽऽ।।।।ऽऽ

मौक्तिकमाला यदि भतनाद्गौ ॥४४॥

यदि भतनात्=भगण-तगण-नगणात् परं गौ=द्वौ गुरू स्यातां तदा "मौक्तिकमाला" भवति। पञ्चभिः षड्भिश्च यतिः।

**भाषा**—भगण, तगण, नगण के अनन्तर दो गुरु हों तो उसका नाम "मौक्तिकमाला" होता है। (उदा०) यथा वा **मम**—

ऽ।।ऽऽ।।।।ऽऽ

मौक्तिकमाला वरतनु कण्ठे
कामिजनानां वशकर (मन्त्रः) पाशः।
कामरहस्ये निपुणतराणां
भाषणमेतत्किमु वितथं स्यात् ॥ ४४ ॥

ज० स० त० गु०२

।ऽ।-।।ऽ ऽऽ।-ऽऽ

उपस्थितमिदं ज्सौ ताद्गकारौ ॥४५॥

ज्सौ=जगणसगणौ, ततः तात्=तगणात् परं गकारौ=द्वौ गुरू स्यातां चेत् तदा "उपस्थितम्" इत्युच्यते छन्दः। पादे यतिः। (उदा०) यथा वा **मम**—

।ऽ।।।ऽऽऽ।ऽऽ

उपस्थितमिदं यस्याऽस्ति सन्ध्या
सदा नियमपालस्य द्विजातेः।
यमो नहि तदीयां नाममालां
महानिरय-पत्रे संप्रधत्ते ॥

"नाम" मदमत्र नामिसम्बन्ध्याचरणमप्युपलक्षयति ॥४५॥

## अथ (१२) जगती—

र० न० भ० स०

ऽ।ऽ-।।।-ऽ।।।ऽ

चन्द्रवर्त्म गदितन्तु रनभसैः ॥४६॥

रनभसैः=रगण-नगण-भगण-सगणैः कृत्वा "चन्द्रवर्त्म" नाम छन्दो गदितम्=कथितम्। चतुर्भिरष्टभिश्च यतिः।

**भाषा**—यदि (क्रमशः) रगण, नगण, भगण, सगण हों तो उस छन्द को "चन्द्रवर्त्म" कहते हैं। (उदा०) यथा वा

चन्द्रवर्त्म पिहितं घनतिमिरैः
राजवर्त्म रहितं जनगमनैः ।
इष्टवर्त्म तदलङ्कुरु सरसे !
कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥ ४६ ॥

ज० त० ज० र०

। ऽ । ऽ ऽ । । । ऽ । ऽ । ऽ

**जतौ तु वंशस्थमुदीरितं जरौ ॥४७॥**

**तु=चेत् जतौ=जगणतगणौ, (अथ) जरौ=जगणरगणौ स्याताम् तदा "वंशस्थं" नाम छन्द उदीरितम्=उक्तम् । पादे यतिः**

**भाषा**—यदि जगण, तगण, जगण, रगण हो तो उसका नाम "वंशस्थ" होता है । ( उदा० ) यथा वा—

* अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयाऽनुगम्यते
जनस्य चित्तेन भृशाऽवशात्मना । ( नैषधम् )

अथवा—उवाच धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥४७॥ ( रघुवंशम् )

त० त० ज० र०

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

**स्यादिन्द्रवंशा ततजै रसंयुतैः ॥४८॥**

**ततजैः=तगण-तगण-जगणैः, कीदृशैः रसंयुतैः=अन्ते रगणोपेतैः तदा "इन्द्रवंशा" नाम छन्दः स्यात् । पादे यतिः ।**

**भाषा**—यदि दो तगण, एक जगण, अन्त में एक रगण हो तो उसका नाम "इन्द्रवंशा" है । ( उदा० ) यथा वा—

* अवश्यभव्येषु=अवश्यं भवितुं योग्येषु अनवग्रहः=रोद्धुमशक्यः ग्रहः हठो यस्याः सा वेधसः=विधातुः स्पृहा=इच्छा यया दिशा धावति=येन २ मार्गेण यद् यद् विषयीकरोतीत्यर्थः, भृशाऽवशात्मना=अत्यन्तं परवशेन जनस्य चित्तेन तयैव दिशा अनुगम्यते, विधातृसङ्कल्पानुसारमेव जीवस्य हृदयमित्याशयः । तृणेन वात्ययेति उपमा ।

* दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः
पीताम्बरोऽसौ जगतां तमोपहः ।
यस्मिन्ममज्जुः शलभा इव स्वयं
ते कंस-चाणूरमुखा मखद्विषः ॥

अन्यदुदाहरणं यथा—

कुर्वीत यो देवगुरुद्विजन्मना—
मुर्वीपतिः पालनमर्थलिप्सया ।
तस्येन्द्रवंशेऽपि गृहीतजन्मनः
सञ्जायते श्रीः प्रतिकूलवर्त्तिनी ॥४८॥

स० स० स० स०
। । ऽ । । ऽ । । ऽ । । ऽ

इह तोटकमम्बुधिसैः प्रथितम् ॥४९॥

इह=छन्दःशास्त्रे अम्बुधिसैः-चतुर्भिः सगणैः "तोटकम्" नाम छन्दः प्रथितम्=प्रसिद्धम् । पादे यतिः ।

**भाषा**—चार सगण हों तो वह छन्द " तोटक " नाम से प्रसिद्ध है ।

(उदा०) यथा वा—

† यमुनातटमच्युतकेलिकला-
लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।
मुदितोऽट कलेरपनेतुमघं
यदि चेच्छसि जन्म निजं सफलम् ॥४९॥

---

* दैत्येन्द्रवंशस्य अग्निः नाशकत्वात् उदीर्णदीधितिः—उद्गतकिरणः सर्वतो विसारिप्रतापवत्त्वात् पीताम्बरः श्रीकृष्णो हरिः । मखद्विषः—असुराः ।

† ( हे ! सखे ! ) यदि च त्वं निजं जन्म सफलमिच्छसि तदा कलेः अघम्=दोषम् अपनेतुं=दूरीकर्त्तुं मुदितः=हृष्टः सन् यमुनातटम्=कालिन्दीतीरम् अट=भ्रम । कीदृशं तटम्—अच्युतेति । अच्युतः नटवत् संसारचर्यां चरन्नपि सर्वदा स्वस्वरूपादपरिभ्रष्टः कूटस्थनित्यत्वात् , तस्य या केलिकला लीला " लोकवत्तु लीलाकैवल्यम् " ( ब्र०सू० २।१।१३ ) इति दर्शनात् तया केलिकलया लसत्=शोभमानं यदङ्घ्रिसरोरुहं चरणकमलं तस्य सङ्गेन सम्बन्धेन रुचिः शोभा यस्य तत् । अन्यदुदाहरणं यथा—

त्यज तोटकमर्थनियोगकरं
प्रमदाधिकृतं व्यसनोपहतम् ।
उपधाभिरशुद्धमतिं सचिवं
नरनायकभीरुकमाधिपकम् ॥

न० भ० भ० र०

। । । । ऽ । । ऽ । । ऽ । ऽ

**द्रुतविलम्बितमाह नभौ भरौ ॥५०॥**

**नभौ=नगण-भगणौ, भरौ=भगण-रगणौ चेद् भवेताम् तदा "द्रुतविलम्बितम्" नाम आह "पिङ्गलमुनि" रिति शेषः। पादे यतिः**

**भाषा**—यदि नगण, भगण, पुनः भगण, ( अन्त में ) एक रगण हो तो द्रुतविलम्बित कहते हैं। ( उदा० ) यथा वा **मम**—

**अयि ! मनो ! नमनोरथसन्ततिं**
**परिविहाय सहायतमं हरिम् ।**
**भजसि तापसतापसमुच्छिदं**
**पथि मते कुमतेः परिसम्भ्रमत्** * ॥ यथा वा—

कार्त्तान्तिककृतान्तविदग्रेसरकाशीनाथशास्त्रिकृते मत्प्रणीतं **गुर्वष्टकम** । तत्रत्यमेकं पद्यमुदाहरामः।

**यदि भजेत गुरोः पदपङ्कजं**
**क्लमहरं भवरोगमहौषधम् ।**
**अथ नरः परमं पदमर्जयेज्**
**जठरधाजठरं न विशेत्पुनः ॥१०॥**

न० न० म० य०

। । । । । । ऽ ऽ ऽ । ऽ ऽ

**वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ॥५१॥**

---

आयुधिकम्=शस्त्राजीवम् । "शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः" इत्यमरः। तोटकस्योदाहरणं **ममापि** यथा—

**त्यज ! दूरत एव शठं मनुजं**
**परवित्तहरं निजकार्यकरम् ।**
**भज ! साधु नरं परया दयया**
**सहितं स्वहितं यदि वाञ्छसि शम् ॥**

* कुमतेः मते पथि 'परिसम्भ्रमत्' इति मनोविशेषणम् । अन्यद्वा—

। । । ऽ । । ऽ । । ऽ । ऽ

**द्रुतगतिः पुरुषो धनभाजनं**
**भवति मन्दगतिश्च सुखोचितः ।**
**द्रुतविलम्बितखलगतिर्नृपः**
**सकलराज्यसुखं प्रियमश्नुते ॥**

नौ=द्वौ नगणौ, म्यौ=मगणयगणौ चेत् अयम् 'पुट' इति नामोच्यते । कथम्भूतः पुटः । वसुयुगविरतिः=वसुभिः=अष्टभिः युगैः=चतुर्भिश्च विरातिः विरामो यत्र स इत्यर्थः ।

भाषा—यदि दो नगण, एक मगण, एक यगण हो तो उस छन्द का नाम "पुट" होता है । ( उदा० ) यथा वा—

। ।। ।। ।ऽऽ ऽ ।ऽऽ

न विचलितं कथञ्चिन्न्या यमार्गाद्

वसुनि शिथिलमुष्टिः पार्थिवो यः ।

अमृतपुट इवासौ पुण्यकर्मा

भवति जगति सेव्यः सर्वलोकैः ॥५१॥

न० न० र० र०

। । ।-। । ।-ऽ । ऽ ऽ । ऽ

## प्रमुदितवदना भवेन्नौ रौ ॥५२॥

नौ=द्वौ नगणौ, रौ=द्वौ रगणौ च स्याताम् तदा "प्रमुदितवदना" नाम छन्दो भवेत् । पादे यतिः । इयं क्वचित् "चञ्चलाक्षिका" क्वचित् "मन्दाकिनी" इत्युक्ता ।

भाषा—दो नगण, और दो रगण हों तो उस छन्द का नाम "प्रमुदितवदना" होता है । ( उदा० ) यथा वा—

* बलिदमनविधौ बभौ संगता

पदजलरुहि यस्य मन्दाकिनी ।

सुरनिहितसिताम्बुजस्रग्निभा

हरतु जगदघानि पीताम्बरः ॥५२॥

न० य० न० य०

। । ।-। ऽ ऽ-। । । । ऽ ऽ

## नयसहितौ न्यौ कुसुमविचित्रा ॥५३॥

नयसहितौ=नगणयगणसहितौ न्यौ=नगणयगणौ अर्थात् पूर्व नगणः, ततो यगणः, पुनर्नगणः पुनरेकः यगणः स्यात् सा "कुसुमविचित्रा" इत्युच्यते ॥

---

* 'बली'ति । बलिदमनविधौ—बलिमथनकाले इत्यर्थः यस्य पदजलरुहि चरणसरोजे मन्दाकिनी=गङ्गा सुरनिहितसिताम्बुजस्रङ्निभा=देवार्पितश्वेतकमलमालासदृशी बभौ=रेजे स पीताम्बरो जगतां पापानि हरत्विति शुभसंशनम् ॥

**भाषा**—यदि ( क्रम से ) नगण, यगण, पुनः नगण और यगण हो तो उस का नाम " कुसुमविचित्रा " है। ( उदा० ) यथा वा—

विगलितहारा सकुसुममाला
सचरणलाक्षावलयसुलक्षा ।
विरचितवेशं सुरतविशेषं
कथयति शय्या कुसुमविचित्रा ॥ यथा वा मम—

। ।। । ऽ ऽ । ।। । ऽ ऽ
कुसुमविचित्रा विलसति कान्ता
रतिसमये गुम्फितकचराजिः ।
युवजनभावैर्विलसितहावा
पुरुसुकृतौघैर्जगति सुलभ्या ॥४३॥

ज० स० ज० स०
। ऽ । । । ऽ । ऽ । । । ऽ

## रसैर्जसजसा जलोद्धतगतिः ॥५४॥

**जसजसा=जगण-सगण-जगण-सगणा यत्र सा एवंभूता " जलोद्धतगतिः "नाम। कैः, रसैः उपलक्षिता इति शेषः। रसाश्च रसाश्च इत्येकशेषे तैः रसैः अर्थात् षड्भिः षड्भिर्यतिमती।**

**भाषा**—यदि जगण, सगण, पुनः ( एक ) जगण ( एक ) सगण हो तो उस को " जलोद्धतगति " कहते हैं। ( उदा० ) यथा वा—

भनक्ति समरे, बहूनपि रिपून्
हरिः प्रभुरसौ, भुजोर्जितबलः ।
जलोद्धतगति, र्यथैवमकर-
स्तरङ्गनिकरं करेण परितः ॥४३॥

य० य० य० य०
। ऽ ऽ । ऽ ऽ-। ऽ ऽ-। ऽ ऽ

## भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥५५॥

**चतुर्भिः यैः=यकारैः " भुजङ्गप्रयातं " नाम छन्दो भवेत्। अत्र पादान्ते यतिः। षड्भिः षड्भिश्च यतिरिति वदन् सम्प्रदायविरोधी। एकदेशी वा स्यात्॥**

**भाषा**—यदि चार यगण हों तो उस का नाम " भुजङ्गप्रयात " होता है। ( उदा० ) यथा वा—

।ऽऽ।ऽऽ।ऽऽ।ऽऽ

* सदारात्मजज्ञातिभृत्यो विहाय
स्वमेतं ह्रदं जीवनं लिप्समानः ।
मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्गप्रयातं द्रुतं सागराय ॥

अन्यद्वोदाहरणं यथा—

पुरः साधुवद्भाति मिथ्याविनीतः
परोक्षे करोत्यर्थनाशं हताशः ।
भुजङ्गप्रयातोपमं यस्य चित्तं
त्यजेत्तादृशं दुश्चरित्रं कुमित्रम् ॥ २५ ॥

र० र० र० र०

ऽ।ऽ-ऽ।ऽ-ऽ।ऽ-ऽ।ऽ

**रैश्चतुर्भिर्युता स्रग्विणी संमता ॥ ५६ ॥**

**चतुर्भिः रैर्युता=अर्थात् यत्र चत्वारो रगणा एव सन्ति सा "स्रग्विणी" नाम सम्मता । इह शास्त्र इति शेषः । पादे यतिः ।**

**भाषा**—जिस में केवल चार रगण हों उस छन्द को "स्रग्विणी" कहते हैं । ( उदा० ) यथा वा—

‡ इन्द्रनीलोपलेनेव या निर्मिता
शातकुम्भद्रवालङ्कृता शोभते ।
नव्यमेघच्छवि पीतवासा हरे-
र्मूर्त्ति रास्तां जयायोरसि स्रग्विणी ॥

यो रणे युध्यते निर्भरं निर्भय-
स्त्यागिता यस्य सर्वस्वदानावधिः ।
तं नरं वीक्ष्य लक्ष्मीर्यशः-स्रग्विणी
नूनमभ्येति सत्कीर्त्तिशुभ्रांशुका ॥ २६ ॥

---

* सदारेति—हे ! कालिय ! भुजङ्ग ! मया क्लेशितः सन् दारात्मजज्ञातिभृत्यैः सह वर्त्तमानः, जीवनं—प्राणनं लिप्समानः एतं स्वं ह्रदं विहाय इत्थम्—अमुना प्रकारेण त्वं द्रुतं—शीघ्रं सागराय प्रयातं कुरु । समुद्रं गत्वा तत्र वासं विधेहीत्यर्थः ।

‡ "इन्द्रनीले"ति—या इन्द्रनीलमणिना निर्मितेव, या च शातकुम्भद्रवेण = सावर्णरसेन अलङ्कृता मण्डितेव शोभते, या नव्यमेघच्छविः = नूतनजलधररुचिः, पीतवासाः= पीताम्बरा चास्ति या च उरसि स्रग्विणी=वनमालोपेता सा हरेः=श्रीकृष्णस्य मूर्त्तिः = तनुः जयाय = सर्वोत्कर्षाय आस्ताम् ॥

न० भ० ज० र०

। । ।-ऽ । । । ऽ ।-ऽ । ऽ

भुवि भवेन्नभजरैः प्रियंवदा ॥५७॥

नभजरैः=नगण-भगण-जगण-रगणैः भुवि=लोके "प्रियंवदा" नाम छन्दो भवेत्। पादे यतिः।

भाषा—यदि (क्रमशः) नगण, भगण, जगण, रगण हो तो उस को "प्रियंवदा" कहते हैं (उदा०) यथा वा मम—

। । । ऽ । । । ऽ । ऽ । ऽ

भवति यस्य भवने प्रियंवदा
सकलकृत्यकरणे कुशाग्रधीः।
रतिषु चाटु-वचसां विलासिनी
फलति जन्म ननु तस्य हासिनी ॥ ५७ ॥

त० य० त० य०

ऽ ऽ ।—। ऽ ऽ-ऽ ऽ ।-। ऽ ऽ

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥५८॥

त्यौ = त्यौ = अर्थात् तगण-यगण-तगण-यगणाश्चेत्स्युः सा "मणिमाला" नाम उच्यते। कीदृशी-गुहवक्त्रैः=अर्थात् षड्भिः षड्भिश्च छिन्ना=यतिमतीत्यर्थः।

भाषा—यदि प्रथम एक तगण, एक यगण, पुनः एक तगण और यगण हो तो उस का नाम "मणिमाला" जानना। (उदा०) यथा वा—

* प्रह्वामरमौलौ, रत्नोपलक्लृप्ते
जातप्रतिबिम्बा शोणा मणिमाला।
गोबिन्दपदाब्जे, राजी नखराणा-
मास्तां मम चित्ते, ध्वान्तं शमयन्ती ॥ ५८ ॥

* "प्रह्वे"ति—प्रह्वाः=नम्रीभूता येऽमरा देवाः तेषां मौलौ मुकुटे, कीदृशे—रत्नोपलक्लृप्ते=रत्नोपलैर्मणिभिः रचिते (या) शोणा=रक्ता मणिमाला (इव) जातप्रतिबिम्बा=संक्रान्ता गोबिन्दपदाब्जे=श्रीकृष्णचरणसरोजे नखराणाम्=नखानां राजी=पङ्क्तिः सा मम चित्ते ध्वान्तं=तमः॥ अन्धकारमज्ञानं वा शमयन्ती=अभिभवन्ती आस्ताम्॥

त० भ० ज० र०

ऽऽ।-ऽ।।।ऽ ।ऽ।ऽ

धीरैरभाणि ललिता तभौ जरौ ॥ ५६ ॥

तभौ=तगण-भगणौ, जरौ = जगण-रगणौ च स्याताम्, सा धीरैः=पण्डितैः "ललिता" नाम अभाणि=कथिता । पादान्ते यतिः ।

भाषा—यदि तगण, भगण, जगण और रगण हो तो उस को "ललिता" कहते हैं । ( उदा० ) यथा वा—मम

नेत्रे विशालसुषमा कुचे घना
पाणौ सरोजरुचिरङ्घ्रियुग्मके† ।
मध्येऽणुसाम्य-मतुलं बिभर्त्ति या
धीरै-रभाणि ललिता नितम्बिनी ॥ ५६ ॥

ज० ज० ज० ज०

।ऽ।-।ऽ।-।ऽ। ।ऽ।

जजाविह मौक्तिकदाम जजौ च ॥ ६० ॥

जजौ=द्वौ जगणौ, च=पुनः जजौ=द्वौ जगणौ अर्थात् यदि पादे चत्वारो जगणाः तदा इह "मौक्तिकदाम" छन्दो भवति । पादे यतिः ।

भाषा—यदि चार जगण हों तो उस छन्द को "मौक्तिकदाम" कहते हैं । ( उदा० ) यथा वा—मम

।ऽ।।ऽ।। ऽ।।ऽ।
* न यस्य भवेदिह मौक्तिकदाम
न राजति तस्य भवे ननु नाम ।
अये ! कुरु यत्नकमर्थकधाम
मुधैव कुतो रटसि प्रभुनाम ॥ ६० ॥

ज० र० ज० र०

।ऽ।-ऽ।ऽ-।ऽ।-ऽ।ऽ

विभावरी तु सा जरौ जरौ यतः ॥ ६१ ॥

† अत्र "च" इत्यस्याऽध्याहारः ॥

* नेति । कस्यचित् श्रीपतेर्वणिजो हरिं धनाय जपन्तं रङ्कं प्रति उक्तिरियम् । यत्न एव यत्नकः अथवा प्रशस्तो यत्नो यत्नकः तम् । अर्थ एव अर्थकः तस्य धाम=राशिं सञ्चय । दृष्टोपायलभ्यैव लक्ष्मीः । "लक्ष्मीर्वसति व्यापारे किञ्चित् ... " इत्युक्तेरित्यर्थः ॥

यतः=यत्र जरौ=जगण रगणौ पुनः जरौ=जगणरगणौ स्याताम्, सा "विभावरी" नाम छन्दः । पादे यतिः । षट्सु २ वेति केचित् । अस्यैव "स्वमोचचामरम" इति सञ्ज्ञान्तरम् । क्वचित्तु—"जरौ जरौ वद स्वमोचचामरम्" इत्येव सूत्रं पठितम् ।

भाषा—यदि जगण, रगण के अनन्तर पुनः जगण रगण हो तो उस छन्द का नाम "विभावरी" है । कई एक इस को "स्वमोचचामर" भी कथन करते हैं । (उदा०) यथा वा मम—

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

अशेषपापशोधकाग्रगण्यकं
श्रुतिस्मृति-प्रसिद्धि-सिद्धि-धन्यकम् ।
शिवेति नाम तारकं विभावरी
* विनाऽस्य कीर्त्तनं सृतिर्महाभया ॥ ६१ ॥

स० ज० स० स०

। । ऽ । ऽ । । । । ऽ । । ऽ

प्रमिताक्षरा सजससैरुदिता ॥ ६२ ॥

स-ज-स-सैः=सगण-जगण-सगण-सगणैः "प्रमिताक्षरा" उदिता=कथिता । पादे यतिः ।

भाषा—सगण, जगण पुनः दो सगण हों तो उस को "प्रमिताक्षरा" कहते हैं । ( उदा० ) यथा वा—

¶ अमृतस्य शीकरमिवोद्गिरती

---

* अस्य तारकनाम्नः कीर्त्तनं विना सृतिः = संसारः महाभया = अतीवभीतिप्रदा विभावरी = रात्रिरेवेत्यन्विताशयः ।

¶ अमृतस्येति—अमृतस्य=सुधायाः शीकरम्=अम्बुकणमुद्गिरतीव रदा एव मौक्तिकानि तेषामंशूनां = किरणानां या लहर्यो वीचयस्ताभिः छुरिता=व्याप्ता प्रमिताक्षरा=अल्पाक्षरवती सूत्रभूता निगूढार्था चेत्यभिप्रायः एवंभूता मुररिपोः = श्रीकृष्णस्य भणितिः= वाक् व्रजसुभ्रुवां मनोऽधिजहारेतिसम्बन्धः । यथा वा मम—

प्रमिताक्षरा सुनयना रुचिरा
पतिभावपूर्ण-हृदया विशदा ॥
गृह-नित्यकृत्यकरणे चतुरा
चतुराननोऽपि विजितोऽस्ति तया ॥

वैवं भूताऽस्ति पतिपरायणा सा अखिलांकमपि प्राप्नोति इत्यभिसन्धिः ।

रदमौक्तिकांशुलहरीच्छुरिता ।
प्रमिताक्षरा मुररिपोर्भणिति-
र्व्रजसुभ्रुवामधिजहार मनः ॥ ६२ ॥

न० न० भ० र०

। । ।-। । ।-ऽ । ।-ऽ । ऽ

## ननभरसहिता ऽभिहितोज्ज्वला ॥ ६३ ॥

ननभरसहिता=नगण-नगण-भगण-रगणयुता "उज्ज्वला" नाम अभिहिता=कथिता । पादे यतिः ।

**भाषा**—यदि दो नगण एक भगण एक रगण हो तो उस को "उज्वला" कहते हैं । ( उदा० ) यथा वा **मम**—

* अयि ! निजहितवर्त्तन-कामिनः !
श्रृणुत मम नरा ! वचनं महत्
परिणयत महाकुलसूतिकां
वरतनुमिह शान्तिमहोज्ज्वलाम् ॥ ६३ ॥

म० म० य० य०

ऽ ऽ ऽ-ऽ ऽ ऽ ऽ-।ऽ ऽ-ऽ ऽ ऽ

## पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६४ ॥

ममौ=द्वौ मगणौ, द्वौ च यगणौ स्याताम् तदा पञ्चाश्वैः=पञ्चभिः सप्तभिश्च छिन्ना=यतिमती "वैश्वदेवी" नाम छन्दः ।

**भाषा**—यदि दो मगण और दो यगण हों तो उस छन्द को "वैश्वदेवी" कहते हैं । पांच और सात पर यति । ( उदा० ) यथा वा—

अर्चामन्येषां,त्वं विहायामराणा-
मद्वैतेनैकं, विष्णुमभ्यर्च्य भक्त्या ।
तत्राशेषात्म, न्यर्चिते भाविनी ते
भ्रातः ! सम्पन्नाराधना † वैश्वदेवी ॥ ६४ ॥

* अयीति—महत्=पूजनीयं वचनं सुखोदर्कत्वात् शान्तिरेव मह उत्सव स्तेन उज्ज्वलाम् अकलहकारिणीं शुचिप्रियां चेत्यर्थः ।

† वैश्वदेवी = आराधना=सर्वतोमुखी उपासना भविष्यतीति शेषः । सकलदेवानां वैश्वरूपान्तःपातित्वात् तद्भावार्चने सकलार्चनासिद्धेः । तत्तत्कामावाप्तौ तत्तद्देवार्चनविधावपि मूलार्चनेन सकलफलावाप्तिरित्याशयः । "फलमत उपपत्ते" (ब्र० सू० ३।२।३८) इति ब्रह्मदर्शनात् ।

म० भ० स० म०

ऽ ऽऽ-ऽ। ।-।।ऽ-ऽ ऽ ऽ

* अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ ॥ ६५ ॥

म्भौ=मगण-भगणौ, स्मौ=सगण-मगणौ च चेत् स्याताम् सा "जलधरमाला" नाम । अब्ध्यष्टाङ्गैः="छिन्ना" इत्यनुषङ्गः चतुर्भिः, अष्टाभिश्च पादयतिः । इयमेव "कान्तोत्पीडा" इति ज्ञेयम् ।

**भाषा**—यदि मगण, भगण, सगण, पुनः एक मगण हो तो उसका नाम "जलधरमाला" होता है। ( उ० ) यथा वा—

या भक्तानां, कलिदुरितोत्तप्तानां
तापच्छेदं, जलधरमाला नव्या ।
भव्याकारा, दिनकरपुत्री-कूले
केलीलोला, हरितनुरव्यात्सा वः ॥ ६५ ॥

य० ज० भ० य०

।। ।।ऽ।-ऽ।।।ऽ ऽ

इह नवमालिनी नजभरौ भ्यौ ॥ ६६ ॥

यदि नजपरौ = नगणजगणाभ्यां परवर्त्तिनौ भ्यौ = भगण-यगणौ स्याताम् तदा इह=छन्दः शास्त्रे "नवमालिनी" स्यात् । अष्टाभिः चतुर्भिश्च यतिरिति वृद्धाः । "नवमालिका" इत्यपि नाम ।

**भाषा**—यदि नगण, जगण, भगण और यगण हो तो उसको "नवमालिनी" जानना। ( उदा० ) यथा वा—

नववरसङ्गमार्थनयनद्धा
चतुरतरालिलोकरसबद्धा ।
वद बुध ! कीदृशी भवति रामा
शृणु नवमालिनीयमधिरासा ॥ ६६ ॥

न० न० र० र०

।।।-।। ।-ऽ।ऽ ऽ।ऽ

स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६७ ॥

* अब्धिपदेन चतुर्णां अङ्गपदेन अष्टानां ग्रहणम् । योगशास्त्रे—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणि अष्टौ योगाङ्गानि भवन्ति ।

ननौ=द्वौ नगणौ, रौ=द्वौ रगणौ चेत् स्याताम् "प्रभा" नाम सा। कीदृशी—स्वरशरविरतिः=स्वरैः सप्तभिः शरैः=पञ्चभिश्च विरतिर्यत्र सा तादृशी।

**भाषा**—यदि दो नगण, दो रगण हों तो उस छन्द को "प्रभा" कहते हैं। (उदा०) यथा वा—**मम**

रणधरणि गत-स्य भीमाकृते
भुजजकुलमणेः * प्रतापप्रभोः।
यवनवनविदा-हवन्हेरहो !
कथमिव कथिता भवेत्सा प्रभा ॥ ६७ ॥

न० ज० ज० र०

।।।- ।ऽ।-। ऽ।-ऽ ।ऽ

## भवति नजावथ मालती जरौ ॥ ६८ ॥

नजौ=नगणजगणौ अथ जरौ=जगणरगणौ स्यातां चेत् सा "मालती" भवति। पञ्चभिः सप्तभिश्च यतिरित्याम्नायः।

**भाषा**—नगण, जगण पुनः एक जगण और रगण हो तो वह छन्द "मालती" नाम कहाता है। (उदा०) यथा वा—

इह कथयाच्युत ! केलिकानने
मधुरससौरभसारलोलुपः।
कुसुमकृतास्मितचारुविभ्रमा-
मलिरपि चुम्बति मालतीं मुहुः ॥ ६८ ॥

न० ज० ज० य०

।।।-। ऽ।-।ऽ।-।ऽऽ

## इति वद तामरसं नजजाद्यः ॥ ६९ ॥

न-ज-जात्=नगण-जगण-जगणात् अर्थात् एको नगणः द्वौ जगणौ ततः परमेको यगणः स्यात् तत् "तामरसम्" इति वद=कथय अर्थात् जानीहि। पादे यतिः।

**भाषा**—यदि प्रथम एक नगण पुनः दो जगणों के अनन्तर एक यगण हो तो उसका नाम "तामरस" जानो (उदा०) यथा वा—

*स्फुटसुषमामकरन्दमनोज्ञं

---

* स्फुटेति। हे ! मुरशत्रो ! मुरारे ! तव मुखतामरसम्=मुखमेव तामरसं कमलं मम हृदयतडागविकाशि=हृदयमेव तडागः तत्र विकासि ... अस्तु इति सम्बन्धः।

व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो !
हृदय-तडागविकाशि ममास्तु ॥ इति ॥ ६९ ॥

# अथ (१३) अतिजगती–

न० न० त० त० गु०

।। ।-। -ऽऽ ।-ऽ ऽ ।-ऽ

**तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ७० ॥**

नौ=द्वौ नगणौ, ततौ=द्वौ तगणौ, गः=एको गुरुश्चेत् सा "क्षमा" नामोच्यते । कीदृशी—तुरगरसयतिः=तुरगैः सप्तभिः रसैः=षड्भिश्च यतिर्यत्र । इमामेव "चन्द्रिका" माहुः । "उत्पलिनी" इत्यपरे ।

**भाषा**—यदि दो नगण, दो तगण, एक गुरु हो तो उस छन्द को ( त्रयोदशाक्षरा जाति में ) क्षमा कहते हैं । ( उदा० ) यथा वा—

* इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेददिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ ( भारविः ) ॥ ७० ॥

म० न० ज० र० गु०

ऽ ऽऽ-।।।-। ऽ।ऽ। ऽ- ऽ

**म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम् ॥ ७१ ॥**

म्नौ=मगणनगणौ, ज्रौ=जगणरगणौ गः=एकश्चेद् गुरुः तदा इयम् "प्रहर्षिणी" नाम । त्रिदशयतिः=त्रिभिर्दशभिश्च यतिर्यत्र सा ।

---

कीदृशं तत्—स्फुटा विमला सुषमा परमाशोभा एव मकरन्दः पुष्परसः तेन मनोज्ञं हृद्यम् । पुनः कीदृशम्–व्रजस्य ललनानां गोपानां नयनान्येव अलयो भ्रमराः तैः निपीतं सादरमीक्षितमित्याशयः ।

* इह पर्वते सुतरं न भवतीति असुतरं दुस्तरामित्यर्थः अन्तरं=मध्यभागं, पुरुष पक्षे अन्तरं=तत्त्वम् दुरधिगमैः=दुर्ग्रहैः, दुःखेनाधिगन्तुमशक्यैः आगमैः=पुराणादिभिः किञ्चिदेव सततं वर्णयन्ति नतु कदाचित् प्रत्यक्षेणापि निःशेषं ज्ञातुमशक्यत्वादिति भावः । किन्तु—अतिविपिनं=अतिगहनं दिग्व्यापिनम् अमुं गिरिं हिमवन्तं परम् पुरुषं परमात्मानमिव परं केवलं पद्मयोनिर्ब्रह्मा वेद नान्य इत्यर्थः ।

**भाषा**—यदि ( क्रमशः ) मगण, नगण, जगण, रगण, और एक गुरु हो तब उस छन्द का नाम " प्रहर्षिणी " होता है । तीन तथा दश पर यति । ( उदा० )—यथा वा—

ऽऽऽ ।। ।। ऽ।ऽ।ऽऽ
विद्वांसो, यदि मम दोषमुद्गिरेयु-
यदि वा, गुणगणमेव कीर्त्तयेयुः ।
तत्तुल्यं, बत ! मनुते मनो मदीयं
तत्कष्टं, यदि पुनरेवमाह मन्दः ॥ ७१ ॥ ( सर्वज्ञात्ममुनिः )

ज० भ० स० र० गु०
।ऽ।-ऽ।।-। ।ऽ—ऽ ।ऽ-ऽ

**चतुर्ग्रहैरिह रुचिरा ज्भौ सरौ गः ॥ ७२ ॥**

**ज्भौ= जगणभगणौ, सरौ=सगणरगणौ, गः=एको गुरुश्चेत् इह=छन्दःशास्त्रे "रुचिरा" नाम सा ज्ञेया । चतुर्ग्रहैः=चतुर्भिः नवभिश्च यतिर्ज्ञेया ।**

**भाषा**—यदि जगण, भगण, सगण और रगण हो तो उसका नाम "रुचिरा" होता है । ( उदा० ) यथा वा—**ममैव**

अबोधिनो, जगति न ये पूजयन्तः
परेश्वरं, सकलसुखाब्धिं महान्तम् ।
अहो ! प्रसू तिलहरिकालीकवर्त्ताः
प्रसूदरे, मलिनतरे ते सदार्त्ताः ॥ ७२ ॥

म० त० य० स० गु०
ऽऽऽ-ऽ ऽ।-। ऽऽ-। ।ऽ-ऽ

**वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७३ ॥**

**म्तौ=मगणतगणौ, य-स-गाः=यगण-सगण-गुरवः " मत्तमयूरं " नाम छन्द उच्यते । वेदैः=चुतुर्भिः=रन्ध्रैः नवाभिश्च यतिः ।**

**भाषा**—मगण, तगण, यगण, सगण और अन्त में एक गुरु हो तो " मत्तमयूर " छन्द कहाता है । ( उदा० ) यथा वा—

* लीलानृत्य-न्मत्तमयूरध्वनिकान्तं

* गोपबधूभिः सह रासक्रीडाकृष्टमनाः रासक्रीडया रासलीलया आकृष्टं मनो यस्य स तादृशः कंसध्वंसी श्रीकृष्णः लीलया नृत्यन्तो नर्त्तनामतन्वाना ये मत्ताः मयूराः तेषां ध्वनिभिः केकाभिः कान्तं मनोहारि । तथा नृत्यन्तो वायुना दोलायमाना ये नीपाः कदम्बाः तेषाम् आमोदी तत्सौरभव्याप्तो यः पयोदानिलः मेघस्पर्शी समीरणः शीतलः इत्यर्थः तेन रम्यम्, एतादृशं निर्जनवृन्दावनमापत्ति समयः

नृत्यन्नीपा–मोदिपयोदानिलरम्यम् ।
रासक्रीडा–कृष्टमना गोपवधूभिः
कंसध्वंसी निर्जनवृन्दावनमाप ॥ अथवा—

हा ! तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तः शल्य इवासीत् क्षितिपोऽपि ॥ ( रघुवंशे )

ब्रह्मविद्यानिरूपण परं " हरिमीडे " स्तोत्रमपि अस्मिन्नेव छन्दसि वर्त्तते ॥७३॥

स० ज० स० ज० गु०

। । ऽ–। ऽ ।–। । ऽ—। ऽ ।–ऽ

**सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥**

सजसाः=सगण–जगण–सगणाः, ततः जगौ=जगणः एको गुरुश्चेत्स्यात्, " मञ्जुभाषिणी " नाम छन्दो ज्ञेयम् । " सुनन्दिनी"ति नामान्तरम । पञ्चभिः अष्टभिश्चात्र यतिरिति सम्प्रदायः। पादान्त एव यतिरित्यस्मद्गुरवः ।

**भाषा**—सगण, जगण, सगण, जगण और एक गुरु हो तो उस को "मञ्जुभाषिणी" कहते हैं । ( उदा० ) यथा वा—

अमृतोर्मिशीतलकरेण लालयं-
स्तनुकान्तिरोचितविलोचनो हरे ! ।
नियतं कलानिधिरसीति वल्लवी
मुदमच्युते व्यधित * मञ्जुभाषिणी ॥७४॥

न० न० त० त० गु०

। । ।–। । ।–ऽ ऽ ।—ऽ ऽ । ऽ

**ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ॥ ७५ ॥**

न–न–त–त–गुरुभिः=आदौ द्वौ नगणौ ततः द्वौ तगणौ, ततः एको गुरुः एतैः कृत्वा "चन्द्रिका" नाम छन्दः । अत्र अश्वर्त्तुभिः= अश्वैः=सप्तभिः ऋतुभिः=षड्भिश्च यतिः ।

**भाषा**—प्रथम दो नगण, पुनः दो तगण और अन्त में एक गुरु हो तो उस का नाम " चन्द्रिका " होता है ।

* इति मञ्जुभाषिणी वल्लवी ... सम्बन्धः

( उदा० ) यथा वा—उक्तमधस्तात्। " क्षमा " लक्षण एव " चन्द्रिका " इति नामान्तरन्यासेनेष्टसिद्धावत्र पाठश्चिन्त्यः ॥ ७५ ॥

# अथ (१४) शक्वरी—

म० त० न० स० गु०२

ऽ ऽ ऽ-ऽ ऽ।-। । । । । । ऽ-ऽऽ

**म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा ॥ ७६ ॥**

म्तौ=मगणतगणौ, न्सौ=नगणसगणौ, गौ=द्वौ गुरू च एतैः कृत्वा " असम्बाधा " नाम छन्द उच्यते। कीदृशी सा—अक्षग्रहविरतिः=अक्षैः पञ्चभिः ग्रहैः नवभिश्च विरतिर्यत्र सा तादृशी।

**भाषा**—यदि मगण, तगण, नगण सगण और अन्त में दो गुरु हों तो उस छन्द का नाम " असम्बाधा " जानना ( उदा० ) यथा वा—

वीर्याग्नौ येन, ज्वलति रणवशात् क्षिप्ते
दैत्येन्द्रे जाता, धरणिरियमसम्बाधा।
धर्मस्थित्यर्थं, प्रकटिततनुसम्बन्धः
साधूनां बाधां, प्रशमयतु स कंसारिः

न० न० र० स० ल०गु०

। । ।-। । ।-ऽ । ऽ-। । ऽ ।-ऽ

**ननरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥**

ननरसलघुगैः=नगण-नगण-रगण-सगण-लघु-गुरुभिश्च " अपराजिता " भवति। स्वरैः=स्वराश्च स्वराश्चेत्येकशेषः। सप्तभिः सप्तभिश्च कृत्वा यतिरित्यर्थः।

**भाषा**—यदि नगण, नगण, रगण, सगण, एक लघु, एक गुरु हो तो उस छन्द का नाम " अपराजिता " है। ( उदा० ) यथा वा—

यदनवधिभुज–प्रताप कृतास्पदा

---

*"वीर्याग्ना"विति। येन श्रीकृष्णेन ज्वलति=दीपिते वीर्याग्नौ रणवशात् रणं द्वारीकृत्येत्यर्थः दैत्येन्द्रे=कंसे क्षिप्ते=आहुतीकृते सति धरणिः=पृथ्वी असम्बाधा=निर्दुःखा जाता सः धर्मस्थित्यर्थं=धर्मरक्षार्थं प्रकटिततनुसम्बन्धः=स्वमाययाऽऽविर्भूतसगुणमूर्त्तिः कंसारिः साधूनाम्=महात्मनां स्वभक्तानां बाधां=पीडां प्रशमयतु।

" परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे " । इति ( भ० गी० ) स्मृतेः।

यदुनिचयचमूः-परै रपराजिता ।
व्यजयत समरे-समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुडध्वजः ॥ ७७ ॥

न० न० भ० न० ल०गु०

। । ।-। । ।-ऽ । ।-। । । । ऽ

**ननभनलगिति प्रहरणकलिका ॥ ७८ ॥**

* ननभनलग्=नगण-नगण-भगण-नगण-लघु-गुरवश्चेदित्यर्थः तदा इयं "प्रहरणकलिका" नामोच्यते । यतिश्च पूर्ववत् ।

**भाषा**—यदि प्रथम दो नगण, पुनः भगण, पुनः नगण, एक लघु, एक गुरु हो तो उस छन्द का नाम "प्रहरण कलिका" होता है । यति पूर्ववत् ( उदा० ) यथा वा—

व्यथयति कुसुम-प्रहरण कलिका
प्रमदवनभवा-तव धनुषि तता ।
विरहविपदि मे-शरणमिह ततो
मधुमथनगुण-स्मरणमविरतम् ॥ ७८ ॥

त० भ० ज० ज० गु०गु०

ऽ ऽ ।-ऽ । ।-। ऽ ।-। ऽ ।-ऽ-ऽ

**उक्ता वसन्ततिलका तभजा जगौ गः ॥**
**सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥**
**उद्धर्षिणीति गदिता मुनिसैतवेन ॥**
**रामेण सेयमुदिता मधुमाधवीति ॥ ७९ ॥**

तभजाः=तगण-भगण-जगणाः, जगौ=जगणः गुरुश्च, गः=पुनरेको गुरुश्चेत् तदा "वसन्ततिलका" नाम उक्ता=कथिता । अस्यैव छन्दसो मतभेदेन सञ्ज्ञान्तरमाह—सिंहोन्नतेयमित्यादिना । स्पष्टम् ।

**भाषा**—जिस में तगण, भगण, जगण, पुनः जगण और अन्त में दो गुरु हों तो उस छन्द का नाम "वसन्ततिलका" होता है । **काश्यप** मुनि के मत में इस का नाम "सिंहोन्नता" और **सैतव** मुनि के मत में "उद्धर्षिणी" तथा **पिङ्गल** के मत में "मधुमाधवी" कहते हैं । ( उदा० ) यथा वा—

* नश्च, नश्च, भश्च, नश्च, ल् च, ग् च एषां समाहारः ।

यः शक्यते श्रुतिभिरेव परोधिगन्तुं
किञ्चित्सुयोगनिपुणै र्हृदि चिन्त्यमूर्त्तिः ।
उद्भावयन्मनसि सम्भजतां स्वभक्तिं
स स्याच्छुभाय करुणाढ्यवपुर्दिनेशः ॥ ( सूर्यशतकम् )

यथा वा मम—( " श्रीकृष्णस्तवकशतकं " खण्डकाव्यम् )

इत्थं विशेषगुणशालिनि यादवेन्द्रे
सद्भक्तिरेव नुदति प्रबलाबलान्माम् ।
यच्चैत्रमासि मधुरं हि पिको विरौति
तच्चारुचूतकलिकानिकरैकहेतुः ॥ ७९ ॥

नाशं गतेषु शिशुनागकनन्दमौर्य-
शुंगान्ध्रवंशमणिषु क्षितिरस्तशोभा।
वीरान्तरोद्भवमियं प्रतिपालयन्ती
कालं कियन्तमथवा वनितेव तस्थे।

## अथ ( १५ ) शक्करी–

ल०१४ गु०

। । । । । । । । । । । । । ।–ऽ

### द्विहतहयलघुरथ गिति शशिकला ॥ ८० ॥

द्विहतहयलघुः=द्विहताः द्विगुणिता हयाः=सप्त लघवो यत्र सा अर्थात् पूर्वं चतुर्दश लघवः अन्ते च ग्=एको गुरुः स्यात् सा " शशिकला " नामोक्ता । सप्तभिः अष्टभिश्च यतिरित्याम्नायः ।

**भाषा**—जिस में १४ लघु और अन्त में एक गुरु हो तो उसका नाम " शशिकला " है ( उदा० ) यथा वा—

। । । । । । । । । । । । । । ऽ

मलयजतिलकसमुदित शशिकला
व्रजयुवतिलसदलिक गगनगता ।
सरसिजनयन हृदयसलिलनिधिं
व्यतनुत विततरभसपरितरलम् ॥ ८० ॥

गु०

१४ल० ऽ

### स्रगिति भवति रसनवकयतिरियम् ॥ ८१ ॥

* " मलयजे "ति—मलयजः = चन्दनं तस्य तिलकमेव समुदितशशिकला = उद्भूतचन्द्रकला कर्त्री, कीदृशी—व्रजयुवतीनां वल्लवीनां लसत् शोभमानमलिकं ललाटमेव गगनं वियत् तत्र गता, सरसिजनयनः कमलनयनः श्रीकृष्णः तस्य हृदयमेव सलिलनिधिः समुद्रः तम् विततरभसपरितरलम् = समुच्छलितं व्यतनुत = चकार । चन्द्रकलोदये समुद्रोच्छलनप्रसिद्धेः ।

अथ इयम् = शशिकला(एव) रसनवकयतिः = रसैः = षड्भिः नवकैः = नवभिश्च यतिर्यस्यां तादृशी स्यात् चेत् तदा " स्रग् " इति नाम छन्दो ज्ञेयम् ।

**भाषा**—यदि उक्त " शशिकला " छन्द में ६, ९ पर यति करें तो उसका नाम " स्रक् " होता है । ( उदा० ) यथा वा—

अयि ! सहचरि ! रुचिरतरगुणमयी
म्रदिमवसतिरनपगतपरिमला ।
स्रगिव निवस विलसदनुपमरसा
सुमुखि ! ※ मुदितदनुजदलनहृदये ! ॥

**वसुमुनियतिरिह मणिगुणनिकरः ॥ ८२ ॥**

यदि वसु–मुनियतिः = वसुभिः अष्टाभिः मुनिभिः=सप्तभिश्च यतिर्यस्याः एवंविधा शशिकला स्यात् तदा " मणिगुणनिकर " इति नाम छन्द उच्यते ।

**भाषा**—यदि शशिकला में आठ ८ और ७ सात पर यति करें तो उस छन्द का नाम " मणिगुणनिकर " होता है । ( उदा० ) यथा वा—

नरकरिपुरवतु–निखिलसुरगति–
रमितमहिमभर–सहजनिवसतिः ।
अनवधिमणिगुण-निकरपरिचितः
सरिदधिपतिरिव–धृततनुविभवः ॥ ८२ ॥

म० म० म० म० म०

ऽ ऽ ऽ—ऽ ऽ ऽ–ऽ ' ऽ ऽ–ऽ ऽ ऽ–ऽ ऽ ऽ

**मा बाणाः स्युर्यस्यां सा कामक्रीडा संज्ञातव्या ॥८३॥**

यस्याम् बाणाः = पञ्च माः = मगणाः स्युः सा "कामक्रीडा" संज्ञातव्या = ज्ञेया । पादे यतिः ।

---

※ मुदिते = हृष्टे दनुजदलनस्य = श्रीकृष्णस्य हृदये स्रगिव=मालेव त्वं निवस इति सम्बन्धः । कीदृशी स्रक्—रुचिरतरगुणमयी = मनोहरसूत्रप्रोता, पक्षे रुचिरतराः = नायकवशकरणे समर्था ये गुणाः सौन्दर्याद्याः तन्मयी सती । पुनः कीदृशी म्रदिमवसतिः—कोमलावासा । उभयत्र समानोऽर्थः । पुनः—अनपगतपरिमला = न अपगतो दूरीभूतः परिमलः सौरभं यस्याः । सहचरीपक्षेऽपिपद्मिनीत्वात् सदा सद्यस्कसौरभा । विलसदनुपमरसा = विलसंन् उद्गच्छन् अनुपमो रसो द्रवो रागो वा यस्याः एकत्र अम्लानत्वात् अपरत्र नवयौवनत्वात् । " शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस " इत्यमरः । सहचरि ! सुमुखि ! इति सम्बोधनपदे ।

**भाषा**—जिस में पांच मगण हो उसको "कामक्रीडा" कहते हैं। (उदा०) यथा वा—

मा कान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्।
क्षुत्क्षामः प्राटंश्चेतो राहुः क्रूरः प्राद्या-
त्तस्माद् ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या ॥ ८३ ॥

न० न० म० य० य०

।।।।।।ऽ ऽ ऽ-। ऽ ऽ-। ऽ ऽ

**ननमयययुतेऽयं मालिनी भोगिलोकैः ॥ ८४ ॥**

**न-न-म-य-य-युता = नगण-नगण-मगण-यगण-यगणयुक्ता इयं "मालिनी" भवति। भोगिलोकैः = अष्टभिः सप्तभिश्च यतौ सत्यामिति शेषः।**

**भाषा**—यदि दो नगण, एक मगण, पुनः दो यगण हों तो वह छन्द "मालिनी" कहाता है। (उदा०) यथा वा—

मृगमदकृतचर्चा पीतकौशेयवासा
रुचिरशिखिशिखण्डा बद्धधम्मिल्लपाशा।
अनृजुनिहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा * ॥ ८४ ॥

इदमसुलभवस्तुप्रार्थनादुर्निवारं,
प्रथममपि मनो मे पंचबाणः क्षिणोति।
किमुत मलयवातान्मूलितापांडुपत्रे
उपवनसहकारैर्दर्शितिष्वंकुरेषु।

न० ज० भ० ज० र०

।।।।ऽ।-ऽ।।-।ऽ।-ऽ।ऽ

**भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८५ ॥**

**नजौ = नगणजगणौ, भजौ = भगणजगणौ रसहितौ अन्ते रगणविशिष्टौ स्यातां चेत् तत् "प्रभद्रकं" नाम छन्दो भवति। सप्तभिः अष्टभिश्च यतिः।**

**भाषा**—यदि नगण, जगण, भगण, जगण और रगण हो तो तब उसका नाम "प्रभद्रक" होता है। (उदा०) यथा वा—**मम**

* अथवा—

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा-लेखनी पत्र मुर्वी।
लिखति यदि गृहीत्वा शारदा सार्वकालं
तदपि तव गुणानामीश ! पारं न याति ॥

ननु यदि नेतृता-भवति कामनातुरा
निजनिजभेदिनी कुलवियोगिनी हता ।
अथ न भवेत्तदा-सकलगं प्रभद्रकं
तदिह पराभवेत् सततमेव भिन्नताम् ॥

स० ज० न० न० य०

। । ऽ - । ऽ । - । । । - । । - । ऽ ऽ

**सजना नयौ शरदशकविरतिरेला ॥ ८६ ॥**

**यत्र सजनाः = सगण-जगण-नगणाः, नयौ = नगण-यगणौ च स्यातां सा " एला " नाम । कीदृशी—शर-दशकविरतिः = शरैः पञ्चभिः दशकैः = दशभिश्च विरतिः यतिर्यत्र तादृशी ॥**

**भाषा**—जब सगण, जगण, नगण, पुनः नगण और अन्त में एक यगण हो तो उसका नाम " एला " छन्द है ॥ ८६ ॥

म० र० म० य० य०

ऽ ऽ ऽ—ऽ । ऽ-ऽ ऽ ऽ-। ऽ ऽ-। ऽ ऽ

**म्रौ भ्यौ यान्तौ भवेतां सप्ताष्टकैश्चन्द्रलेखा ॥ ८७ ॥**

**यत्र म्रौ = मगणरगणौ भ्यौ = भगण-यगणौ, यान्तौ=अन्ते एकेन यगणेन संयुक्तौ भवेताम् = स्याताम् सा " चन्द्रलेखा " नाम । अत्र सप्ताष्टकैः = सप्तभिः अष्टभिश्च यतिः कार्येत्यर्थः ।**

**भाषा**—जिस में मगण, रगण, मगण और अन्त में दो यगण हो तो उस को " चन्द्रलेखा " कहते हैं ॥ ८७ ॥

## अथ [ १६ ] अष्टिः—

भ० र० न० न० न० गु०

ऽ । ।-ऽ । ऽ-। । ।-। । ।-। । ।-ऽ

**भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ८७ ॥**

**भ्रत्रिनगैः = भगण-रगणौ, त्रयो नगणाः एको गुरुश्चेत् " ऋषभगजविलसितम् " इति नाम । परन्तु—स्वरात् = सप्तमात्परं खम् = विरामो भवेत् ।**

**भाषा**—यदि भगण, रगण तीन रगण के अनन्तर एक गुरु हो तो उसको " ऋषभगजविलसित " कहते हैं । ( उदा० ) यथा वा—

यो हरिरुच्चखान-खरतरनखशिखरै-
दुर्जयदैत्यसिंह-सुविकटहृदयतटम्।
किमिह चित्रमेत-दखिलमपहृतवतः
कंसनिदेश-दृष्य-वृषभगजविलसितम्॥ ८७॥

न० ज० भ० ज० र० गु०

। । ।-। ऽ । ऽ । ।-। ऽ । ऽ ।ऽ-ऽ

**नजभजरैः यदा भवति वाणिनी गयुक्तैः॥८८॥**

यदा नजभजरैः=नगण-जगण-भगण-जगण-रगणैः गयुक्तैः= अन्ते एकेन गुरुणोपेतैर्भवति "वाणिनी" नाम सा। पादे यतिः।

भाषा—जब नगण, जगण, भगण, जगण, रगण और अन्त में एक गुरु हो तो उस छन्द का नाम " वाणिनी " होता है। ( उदा० यथा वा—

स्फुरतु ममाननेऽद्य ननु वाणि! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम्।
भवजलराशि पारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम्॥८८॥

ज र० ज० र० ज०गु०

। ऽ ।-ऽ । ऽ-। ऽ । ऽ । ऽ-। ऽ । ऽ

**जरौ जरौ जगाविदं वदन्ति पञ्चचामरम्॥८६॥**

जरौ=जगणरगणौ, जरौ=जगण-रगणौ, ततः जगौ=जगण-गुरू चेत् तदा इदं " पञ्चचामरं " नाम छन्दो वदन्ति॥ द्वाभ्यां २ यतिः। यथेष्टं वेति सम्प्रदायः।

भाषा—यदि जगण, रगण, पुनः जगण, रगण के अनन्तर एक जगण और गुरु हो तो उस छन्द का नाम " पञ्चचामर " ( उदा० ) यथा वा—

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।ऽ

* सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते

* " सुरद्रु–" इति। सुरद्रुः कल्पतरुः तस्य मूलमधोभागः तत्र मण्डपे मण्डपं विशिनष्टि—विचित्रेति। विचित्राणि विविधानि यानि रत्नानि मणिमौक्तिकादीनि हीरकप्रभृतीनि तैर्निर्मिते, लसत्=भासमानं यद्वितानम् उल्लोचः तेन भूषिते सुरद्रुमूलमण्डपे, सललिविभ्रमालसम्=खेलाविलासश्रान्तम् सुराङ्गनाः=अप्सरसः तदाभाः तत्तुल्या या वल्लभ्यो [illegible] तासां करप्रपञ्चैः पेलवपाणिपल्लवपटलैः चामरैः

लसद्वितानभूषिते सलीलविभ्रमालसम् ।
सुराङ्गनाभवल्लवी-कर-प्रपञ्चचामरं-
स्फुरत्समीर-वीजितं सदाच्युतं भजामि तम् ॥८६॥

## अथ [ १७ ] अत्यष्टिः—

य० म० न० स० भ० ल०गु०

। ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ । । । ऽ

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥९०॥

**यमनसभलाः = यगण-मगण-नगण-सगण-भगणाः एको लघुश्च, गः = अन्ते एको गुरुश्चेत् स्यात् सा " शिखरिणी " इत्युच्यते। कीदृशी रसैः = षड्भिः रुद्रैः = एकादशभिः छिन्ना = यतिमती।**

**भाषा**—जिसमें यगण, मगण, नगण, सगण, भगण, अन्त में क्रमशः एक लघु और एक गुरु हों तो उस छन्द को " शिखरिणी " कहते हैं । ( उदा० ) यथा वा—

* त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥९०॥

---

चमरिकाभिः स्फुरन् यः समीरः पवनः तेन वीजितं सेवितम् तम् = वेदैकवेद्यं अच्युतं कृष्णावतारं हरिं सदा भजामि सेवे तं स्मरामीत्यर्थः ॥

* हे ! वरद ! परिणताः परिपक्वबुद्धयः त्वयि विषये एवं परिच्छिन्नाम् = एवं प्रकारेण परिच्छिन्नत्वेन रूपेण त्वां प्रतिपादयन्तीं गिरं = वाचं बिभ्रतु = धारयन्तु नाम । केन रूपेण परिच्छिन्नामित्यत आह—त्वमर्क इत्यादिना । अर्कादयः प्रसिद्धाः । आत्मा = क्षेत्रज्ञो यजमानरूपः एते च अष्टावपि श्रीरुद्रमूर्त्तित्वेनागमप्रसिद्धाः इति वदन्तु नामैवम्—वयन्तु तत्तत्त्वं वस्तु न विद्मो नैव जानीमो यत्त्वं न भवसि । अर्थात् सर्वात्मकत्वान्-महेश्वरस्य नाष्टमूर्त्तिमात्रत्वमेवेति परः सार इति संक्षेपः । अधिकं महिम्नस्तोत्रीयमधुसूदनी-व्याख्यायाम् । यथा वा मत्प्रणीतायां " शिवशिखरिण्याम् "—

परक्षेत्रासक्तं ह्यसकृदपरैस्ताडितमहो
चरन्तं गोमध्ये तृणसमसुखच्छेदिनि भवे ।
पुरस्तादयान्तं हरिमपि न मत्वा वृषपते !
हृदुत्थं तं ... ...तरमाराहतु विभो ! ॥—

ज० स० ज० स० य० ल०गु०

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

## जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥६१॥

जसौ = जगण-सगणौ, जसयलाः = जगण-सगण-यगण-लघवः गुरुः = एको गुरुश्च एते यत्र सन्ति सा "पृथ्वी" नाम छन्दः । वसुग्रहयतिः = वसुभिः अष्टाभिः ग्रहैः = नवभिश्च यतिर्यत्र, सेत्यर्थः ।

भाषा—जिसमें जगण, सगण, जगण, सगण, यगण, लघु और अन्त में एक गुरु हो तो उस छन्द को "पृथ्वी" कहते हैं ॥ ( उदा० ) यथा वा—

* दुरन्तदनुजेश्वर-प्रकरदुस्थपृथ्वी-भरं
जहार निजलीलया-यदुकुलेऽवतीर्याऽशु यः ।
स एष जगतां गति-र्दुरितभारमस्मादृशां
हरिष्यति हरिः-स्तुतिस्मरणचाटुभिस्तोषितः ॥६१॥

भ० र० न० भ० न०ल०गु०

ऽ । । ऽ । ऽ । । । ऽ । । । । । ऽ

## दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ६२ ॥

भरनभनलगैः-भगण-रगण-नगण-भगण-नगण-लघुगुरुभिः "वंशपत्रपतितं" नाम छन्दः । कीदृशम्—दिशश्च मुनयश्चैषां समाहारः । अर्थात् दशभिः सप्तभिर्यतिर्यत्र तत् । "वंशपत्रपतिता" इति केचित् ।

---

हे ! विभो ! भवान् आरोहतु " इति कर्तृपदमध्याहृत्य व्याख्येयम् । अगूढोऽपि श्लेषः पण्डितरूपैर्वेद्यः ॥ ग्रन्थगौरवान्न व्याख्यातम् ।

* दुरन्तेति—दुरन्ता दुर्जयाः ये दनुजेश्वराः कंसाद्याः तेषां प्रकरेण समुदायेन दुःस्थः सोढुमशक्यो यो पृथ्वीभरः तं यदुकुलेऽवतीर्य आशु क्षिप्रमेव यः निजलीलया = स्वतन्त्रलीलया जहार = दूरीचक्रे । सः लोकवेदप्रसिद्धः एषः = हृदयस्थः जगतां गतिः= आश्रयः । स्तुतिस्मरणचाटुभिः तोषितः सन् अस्मादृशाम् पापिनामपीत्यर्थः दुरितभारम् = पापपुञ्जं हरिष्यति = ध्वंसयतीत्यर्थः । यथा वा—( सूर्यशतके )

दधच्च भुवनत्रयं महितभाभि राभाकरो
रथेन महताऽनिशं गगनमण्डलं मण्डयन् ।
प्रयाति रहितः श्रमै र्द्रुतमनूरुसूतो नुतः
सुमेरुमथनैः सदा स कुशलाशिवं श्रीरविः ॥

**भाषा**—जिस में ( क्रम से ) भगण, रगण, नगण, भगण, नगण, लघु, गुरु हों तो उस का नाम " वंशपत्रपतित " होता है। ( उदा० ) यथा वा—

* **सम्प्रति लब्धजन्म शनकैः, कथमपि लघुनि**
**क्षीणपयस्युपेयुषि भिदां, जलधरपटले।**
**खण्डित-विग्रहं बलाभिदं, धनुरिह विविधाः**
**पूरयितुं भवन्ति विभवः, शिखरमणिरुचः ॥९२॥ (भारविः)**

न० स० म० र० स० ल०गु०

।।।-।।ऽ-ऽ ऽ ऽ-ऽ ।ऽ-।। ऽ ।-ऽ

## रसयुगहयैर्न्सौं म्रौ स्लौ गो यदा हरिणी तदा ॥९३॥

**यदा न्सौं = नगणसगणौ, म्रौ = मगणरगणौ, स्लौ = सगणो लघुश्च, गः एकश्चान्ते गुरुः इति स्यात्, तदा " हरिणी " नाम छन्दः। रसयुगहयैः = षड्भिः, चतुर्भिः, सप्तभिः यतौ सत्यामिति शेषः।**

**भाषा**—( जिसमें ) जब नगण, सगण, मगण, रगण, सगण, एक लघु और एक गुरु हो तो उस छन्द का नाम " हरिणी " होता है। ( उदा० ) यथा वा—

**सुमुखि लघवः-पञ्च प्राच्या-स्ततोदशमान्तिम-**
**स्तदनु ललिता-लापे वर्णौ-तृतीयचतुर्थकौ।**
**प्रभवति पुन-र्यत्रोपान्त्यः-स्फुरत्कनकप्रभे!**
**यतिरपि रसै-र्वेदैरश्वैः-स्मृता हरिणीति सा ॥९३॥**

भ० भ० न० त० त० गु०२

ऽ ऽ ऽ-ऽ ।।-।।।-ऽ ऽ।-ऽ ऽ।-ऽ ऽ

## मन्दाक्रान्ता जलधिषडगैर्म्भौंनतौ ताद्गुरू चेत् ॥९४॥

**चेत् = यदि म्भौ = मगणभगणौ, नतौ = नगणतगणौ पुनः तात् = अन्यस्मात् तगणात् परं गुरू = द्वौ च गुरू स्याताम् सा " मन्दा-**

* " सम्प्रति " इति। इह = अस्मिन्नद्रौ विविधाः = नानावर्णाः शिखरमणिरुचः सम्प्रति अर्थात् शरत्काले लघुनि = अगुरुणि कुतः क्षीणपयसि अतएव भिदां = भेदमुपेयुषि छेदं गते जलधरपटले = मेघमण्डले कथमपि शनकैः लब्धजन्म उत्पन्नमित्यर्थः अतएव खण्डितविग्रहं छिन्नस्वरूपं बलभिदः इन्द्रस्य धनुः पूरयितुं विभवः = समर्था भवन्तीत्यर्थः

क्रान्ता" नाम कथ्यते। जलधिषडगैः=चतुर्भिः, षड्भिः, सप्तभिश्च यतौ सत्यामिति शेषः। जलधिः=चत्वारः। अगाः=सप्त।

**भाषा**—यदि मगण, मगण, भगण, नगण, दो तगण और अन्त में दो गुरु हों तो उस छन्द को "मन्दाक्रान्ता" कहते हैं। (उदा०) यथा वा—

"धाम्नां धाम-त्वमसि भगवन्-जाप्य इष्टौ द्विजानां
यस्य ध्याना-दमलतरतां बुद्धिराप्नोति सद्यः।
यस्मिन्प्राप्ते-कुधर मुदयं-जाग्रति प्राणिसङ्घाः।
रक्ष्यानस्मा-नयि! दिनमणे! पाहि देव! प्रसीद॥ ६४॥

न० ज० भ० ज० ज० ल०गु०

।। ।।ऽ ।ऽ ।।-।ऽ ।-।ऽ।-।-ऽ

## यदि भवतो नजौ भजयला गुरुर्नर्कुटकम्॥ ६५॥

यदि नजौ=नगणजगणौ स्तः, ततः भजजलाः=भगण-जगण-जगण-लघवः स्युः गुरुः=एकश्चान्ते गुरुर्वर्णः स्यात् तदा "नर्कुटकं" नाम छन्दः। सप्तभिः दशभिश्च यतिरिति सम्प्रदायः। अस्यैव "नर्दटकम्", "मर्कटकम्" इत्यपि च नामान्तरम्।

**भाषा**—यदि नगण, जगण, भगण, के अनन्तर पुनः दो जगण, एक लघु और एक गुरु हो तो उस छन्द को "नर्कुटक" कहते हैं। (उदा०) यथा वा—
**श्रीमद्भागवते** दशमस्कन्धे वेदस्तुतिः। तथाहि—(तत्रत्यमाद्यं पद्यम्)।

।।।।ऽ।ऽ ।।।ऽ।।ऽ।।ऽ

* जय जय जह्यजा-मजितदोषगृभीतगुणां
त्वमसि यदात्मना-समवरुद्ध-समस्तभगः।
अगजगदोकसा-मखिलशक्त्यवबोधक! ते
क्वचिदजयात्मना-च चरतोऽनुचरेन्निगमः॥ ६५॥

---

* अजित! स्वाभाविकज्ञानबलक्रियात्मकसामर्थ्योपेत! त्वं जय जय=सर्वोत्कर्षेण वर्त्तस्व। तथा दोषगृभीतगुणाम्=दोषेण स्वात्मावरणस्वरूपेणैव गृभीताः गृहीता गुणाः=सत्त्वाद्या यया ताम् अजाम्—अनाद्यविद्यां जहि=दूरीकुरु। हे! अगजगदोकसाम्—चराचरात्मकजीवानाम् अखिलशक्त्यवबोधक! प्रलयकाले प्रसुप्ताया अदृष्टादिशक्तेरुद्बोधक! त्वम् आत्मना स्वस्वरूपेणैव समवरुद्धसमस्तभगः=वशीकृतसकलैश्वर्योऽसि तवैश्वर्यं न परायत्तमीश्वरत्वादिति भावः। क्वचित्=कदाचित् सृष्ट्यवस्थायाम् आत्मना=आत्मसामर्थ्येन चरतः=रचयतोऽस्य संसारस्य ते=तव त्वामित्यर्थः निगमः=वेदः अनुचरेत्=प्रतिपादयतीत्यर्थः। सृष्ट्यवस्थायां निश्वासन्यायेन त्वत्त आविर्भूतो वेदस्त्वय्येवैकस्मिन्नद्वितीये

मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ॥ ९६ ॥

( हे ! शिष्य ! ) यदि उक्तं छन्दः मुनिगुहकार्णवैः = सप्तभिः, षड्भिः, चतुर्भिश्चेत्यर्थः कृतयति = यतियुतं स्यात् तदा तत् त्वं " कोकिलकम् " वद = ब्रूहि जानीहीत्यत्र तात्पर्यम् ।

भाषा—यदि नर्कुटक मे सात ७, छः ६, और चार ४ पर यति की जाय तो उसको " कोकिलक " जानो । ( उदा० ) यथा वा—

लसदरुणेक्षणं-मधुरभाषण-मोदकरं
मधुसमयागमे-सरसकेलिभि-रुल्लासितम् ।
अलिललितद्युतिं-रविसुतावन-कोकिलकं
ननु कलयामितं-सखि ! सदा हृदि-नन्दसुतम् ॥ ९६ ॥

## अथ ( १८ ) धृतिः ।

म० त० न० य० य० य०

ऽ ऽऽऽऽ ।-।-। ।-।ऽ ऽ-।ऽ ऽ-।ऽ ऽ

स्याद्भूतर्त्वश्वैः कुसुमितलता वेल्लिता म्तौ नयौ यौ ॥९७॥

म्तौ=मगणतगणौ, नयौ = नगणयगणौ, पुनः यौ=द्वौ यगणौ, एते यदि स्युः अथ भूतर्त्वश्वैः=पञ्चभिः, षड्भिः, सप्तभिश्चेत्यर्थः स्यात्=यतिर्भवेत् तदा सा " कुसुमितलतावेल्लिता " नाम छन्दः

भाषा—जब मगण, तगण, नगण, और तीन यगण हों, तथा ५ पांच, ६ छः, ७ सात पर यति हो तो उस छन्द को "कुसुमितलतावेल्लिता" कहते हैं । ( उदा० ) यथा वा—

* क्रीडत्कालिन्दी-ललितलहरी-वारिभिर्दाक्षिणात्यै-
र्वातैः खेलद्भिः-कुसुमितलता-वेल्लिता मन्दमन्दम् ।
भृङ्गालिगीतैः-किसलयकरो-ल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो-रभसतरलं-चक्रपाणेश्चकार ॥ ९७ ॥

---

तात्पर्यमवबोधयन् विश्रान्तो भवतीत्यर्थः । एतेन धर्मार्थकामोक्षात्मकपुरुषार्थ एव सृष्टेःप्रयोजनमितिपूर्वप्रश्नोत्तरमुक्तं भवति ।

प्रपन्नपदाख्याव्याख्याकारस्तु—पिङ्गलसूत्रमुपन्यस्यन्नपि तद्विरोधेन वृत्तरत्नाकरेऽस्य लक्षणं लिखन् संस्कृते भाषायाञ्च तदीयां व्याख्यां कुर्वाणः ( जगणस्थाने यगणं निवेशयन् ) पण्डितैरेव प्रष्टव्यः ॥

* क्रीडदिति—कुसुमितलता = पुष्पिता वल्ली (जातावेकवचनम् ) चक्रपाणेश्चेतः रभसतरलं = बलवच्चपलं चकारेति क्रियाकारकान्वयः । कीदृशी लता—वातैः = समीरणैः

# अथ (१९) अतिधृतिः।

य० म० न० स० र० र० गु०

ISS-S S S-III IIS-SIS-SIS S

**रसर्त्वश्वैर्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ॥९८॥**

यदि य्मौ=यगणमगणौ, न्सौ=नगणसगणौ, स्याताम् किन्तु तौ ररगुरुयुतौ=रगण-रगण-गुरुभिः सहितौ भवेताम् अर्थात् यत्र यगण-मगण-नगण-सगण-रगण-रगण-गुरवः यथाक्रमं स्युः सा "मेघविस्फूर्जिता" भवति। रसर्त्वश्वैः=(रसैः) षड्भिः, (ऋतुभिः) षड्भिः (अश्वैः) सप्तभिश्च यतौ सत्यामिति शेषः।

**भाषा**—जिसमें क्रम से यगण, मगण, नगण, सगण, रगण, रगण, अन्त में (एक) गुरु हो तो उस छन्द का नाम "मेघविस्फूर्जिता", होता है। (उदा०) यथा वा—

कदम्बामोदाढ्या, विपिनपवनाः, केकिनः कान्तकेकाः
विनिद्राः कन्दल्यो, दिशि दिशिमुदा दर्दुरा दृप्तनादाः।
निशानृत्यद्विद्य-द्विलसितलसन्-मेघविस्फूर्जिता चेत्
प्रियः स्वाधीनोऽसौ, दनुजदलनो, राज्यमस्मात्किमन्यत् ॥ ९८ ॥

वर्षावर्णनमेतत्।

म० स० ज० स० त० त० गु०

SSS-IIS-ISI-IIS-SSI-SSI-S

**सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥९९॥**

मसजस्तताः=मगण-सगण-जगण-सगण-तगण-तगणाः सगुरवः=एकेन गुरुणायुताः चेत् स्युः तत् "शार्दूलविक्रीडितं" नाम छन्दः। सूर्याश्वैः=द्वादशभिः सप्तभिश्च यतौ सत्यामिति शेषः।

---

मन्दमन्दं वेल्लिता = कम्पिता। कथंभूतैः वातैः। दाक्षिणात्यैः = दक्षिणदिशातः सञ्चलितैः एतेन वातानां मन्दत्वं सौगन्ध्यञ्च सूचितम्। पुनः कीदृशैः—क्रीडन्ती सोल्लासं प्रवाहमातन्वाना या कालिन्दी यमुना तस्याः ललितलहरीणां = मनोहरतरङ्गाणां वारिभिर्जलैः सह खेलद्भिः तत्स्पर्शवद्भिरित्यर्थः एतेनैषां शीतलता प्रकटीकृता। कीदृशी लता—किसलयकरोल्लासितैः = किसलयान्येव कराः पाणयः तेषाम् उल्लासितैः अभिनयविशेषैः भृङ्गाः भ्रमरा एव आलयः सख्यः [illegible] लास्यलक्ष्मीं = नृत्यविशेषश्रियं तन्वाना = कुर्वाणा ॥

**भाषा**—जिस में मगण, सगण, जगण, ( पुनः ) सगण, और दो तगण तथा अन्त में एक गुरु हो और १२, ७ पर यति हो तो उस छन्द का नाम " शार्दूलविक्रीडित " होता है ( उदा० ) यथा वा—

आद्यं यत्र गुरुत्रयं प्रियतमे ! षष्ठं ततश्चाष्टमं
सन्त्येकादशतस्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः ।
मार्त्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने !
तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितम् ॥ अथवा—
गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! तं घोषयाऽहर्निशं
पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् ।
एवञ्चेत्कुरुताखिलं मम हितं शीर्षादयस्तद्ध्रुवं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥ ९९ ॥

## अथ [ २० ] कृतिः—

म० र० भ० न० य० भ० ल०गु०

ऽऽऽ-ऽ।ऽ-ऽ।। ।।।-।ऽ ऽ--ऽ ।।।ऽ

**ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥१००॥**

**मरभनययुता=मगण-रगण-भगण-नगण-यगणैर्युता, अथ च यत्र भ्लौ=भगणः लघुश्च, ततः गः = एका गुरुरपि स्यात् तत् " सुवदना " नाम छन्दो ज्ञेयम् । सप्ताश्वषड्भिः=सप्तभिः, सप्तभिः, षड्भिश्च यतौ सत्यामिति शेषः । अश्वपदेन सप्तसंख्याग्रहणम् ।**

**भाषा**—जिसमें मगण, रगण, भगण, नगण, यगण, ( पुनः ) भगण, लघु, और अन्त में एक गुरु हो तथा ७, ७, ६ पर यति हो तो उस छन्द को " सुवदना " कहते हैं । ( उदा० ) यथा वा—

ऽऽऽऽ ।ऽऽ ।।।।।ऽऽऽ।।।ऽ
प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका ।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥ १०० ॥

र० ज० र० ज० र० ज० गु०ल०

ऽ।ऽ-।ऽ ।ऽ।ऽ-।ऽ।-ऽ।ऽ-। ऽ।ऽ-।

**श्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥१०१॥**

त्रिः=त्रिवारं रजौ = रगणजगणौ, गलौ = गुरुलघू च स्याताम् ईदृशेन लक्षणेन वृत्तं नाम छन्दः। पादान्ते यतिः। छन्दोमञ्जर्यामप्युक्तम्-"वृत्तमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च" इति।

भाषा—जिसमें तीन वार रगण, और तीन वार जगण हो अर्थात् रगण, जगण, रगण, जगण, पुनः रगण जगण, और एक गुरु, एक लघु हो तो उस छन्द का नाम "वृत्त" होता है। (उदा०) यथा वा—

*चित्तवृत्तिलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोविलाससम्पदाकलाकतूहलेन।
यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः समे सदाऽस्तु ॥१०१॥

## अथ (२१) प्रकृतिः-

म० र० भ० न० य० य० य०

ऽ ऽऽ-ऽ ।ऽ-ऽ ।।। ।।ऽ ऽ-।ऽऽ ।ऽऽ

**म्रभ्नैर्यानां त्रयेण त्रिमुनि यतियुता स्रग्धरा कीर्तितेयम्॥१०२**

म्रभ्नैः=मगण-रगण-भगण-नगणैः यानाम्=यगणानां त्रयेण=त्रिभिर्यगणैरित्यर्थः त्रिमुनियतियुता=त्रिवारं मुनिभि र्यतियुता=सप्तभिः सप्तभिः, सप्तभिश्च यतिमतीत्यर्थः एवंलक्षणा इयं "स्रग्धरा" कीर्त्तिता = कथिता।

भाषा—यदि मगण, रगण, भगण, नगण और तीन यगण हों तथा तीनवार सात २ अक्षरों पर यति हो तो वह छन्द "स्रग्धरा" कहाता है। (उदा०) यथा वा—

†व्याकोषेन्दीवराभा कनककषलसत्पीतवासाः सुहासा
बर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा।

* "चित्तवृत्ती" ति। सः=वेदैकवेद्यः विष्णुः मे मम चित्तपद्मकोषषट्पदः=मानसकमलकुड्मलभ्रमरः सदा अस्त्विति सम्बन्धः। सः कः यः सुराङ्गनानिभैः = अप्सरःसदृशैः व्रजाङ्गनाजनैः वल्लवीभिः समं सुखं यथा तथा समेत्य उल्ललास=उद्भटरासक्रीडाकारी बभूव। कया—चित्तवृत्तिलीलया सङ्कल्पमात्रेणेत्यर्थः। वस्तुतस्तु असङ्गस्वरूप एवेति भावः। अथच निसर्गरम्यदेहरूपविभ्रमेण = अप्राकृतसुन्दरवपुर्विलासेन तथा राजमानं शोभमानं यत् सद् उत्तमं वयः कैशोरपौगण्डादि तस्य यो विलासः स्थितिविशेषः सैव सम्पदाकला विभूतिविद्या तस्याः कुतूहलेन चोपलक्षितः। उभयत्र उपलक्षणे तृतीया।

† व्याकोषेति (इह) जगति=संसारे गोपस्य विष्णोः श्रीकृष्णावतारस्य भगवतो मूर्त्तिः=तनुः नः=अस्मान् अवतु=पात्विति सम्बन्धः। कीदृशी मूर्त्तिरित्यपेक्षायां प्रथमान्तैः पदैस्तां विशिनष्टि—व्याकोषेन्दीवराभा=विकसन्नीलकमलद्युतिः। कनककषः=

अंसन्यासक्तवंशी-ध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णो रवतु जगति नः स्रग्धरा हारिहारा ॥१०२॥

# अथ [ २२ ] आकृतिः—

भ० र० न० र० न० र० न० गु०

ऽ ।।-ऽ।ऽ-।। ।ऽ-।ऽ।-।।ऽ-। ऽ।-। ।ऽ

**भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम् ॥१०३॥**

**भ्रौ=भगणरगणौ, नरनाः=नगण-रगण-नगणाः रनौ=रगण-नगणौ अथ एको गुरुश्चेत् हि=निश्चयेन "भद्रकम्" इति नाम छन्द उक्तम्। कीदृशं तत्—दिगर्कविरमम्=दिग्भिः दशभिः अर्कैः= द्वादशभिश्च विरमो विरतिर्यत्र तत्।**

**भाषा**—भगण, रगण, नगण, रगण, नगण, रगण, नगण और अन्त में एक गुरु हो तथा १० दश, १२ द्वादश पर यति हो तो उस छन्द का नाम "भद्रक" होता है।

अत्रैव केचित् " मदिरा " मपि लक्षयन्ति—सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा **मदिरा** " * इति।

---

सुवर्णलेखा तद्वत् लसन्ति शोभमानानि पीतानि वासांसि यस्यां सा, सुहासा=मन्दस्मेरानना। उच्चन्द्रकान्तः=उत् ऊर्ध्वं चन्द्रकाणां चन्द्रकानां ( मयूरपुच्छपत्रवर्त्तिनां ) अन्तैः= प्रान्तभागैः वलयितचिकुरा=वेल्लितसंयतकचा, तथा चारू कर्णयोरवतंसौ यत्र सा, अंसयोर्व्यासक्ता सम्बन्द्धा या वंशी वेणुः तस्या ध्वनिना निनदेन सुखितमानन्दितं जगत् यया सा; तथा—वल्लवीभिः=गोपीभिः लसन्ती तासां मध्यवर्त्तित्वात् नक्षत्रेषु चन्द्र इव राजमानेति-गूढोऽभिप्रायः, तथा—स्रग्धरा=वनमालाचिता. हारी रम्यो हारो मुक्तामणिमाला यत्र सा तादृशीत्यर्थः। अन्यदुदाहरणं यथा वा—

**मा द्राक्षं क्षीणपुण्यान् क्षणमपि भवतोभक्तिहीनान्पदाब्जे**
**मा श्रौषं श्रव्यबद्धं तव वर ! चरितादन्यदाख्यानजातम् !**
**मा स्प्राक्षं माधव ! त्वामपि भुवनपते ! चेतसापन्हुवानं**
**मा भूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि ॥** (मुकुन्दमाला)

* उदाहरन्ति च—

**माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-**
**र्भृङ्गकुलैरुपगीतवने वनमालिनमालि ! कलानिलयम्।**
**कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं**
**तं भज माधविकामृदुनर्त्तनयामलवातकृतोपगमम् " ॥—**

## अथ ( २३ ) विकृतिः—

न० ज० भ० ज० भ० ज० भ० ल०गु

। । । । ऽ ।-ऽ । ।-। ऽ ।-ऽ । ।-। ऽ । ऽ । ।-।-ऽ

**यदिह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयतिमत् ॥१०४**

**यदि इह नजौ=नगणजगणौ, भजौ=भगणजगणौ भजभलगाः=भगण-जगण-भगण-लघु-गुरवः स्युः तदा तत् "अश्वललितम्" नाम छन्दः । कीदृशम्—हरार्कयतिमत्=हराः ११ श, अर्काः, १२ श, एभिर्यतिरस्यास्तीति तादृशम् । इदमेवान्यत्र** "अद्रितनया" **इत्युक्तम् ।**

**भाषा**—यदि नगण, जगण, भगण, जगण, भगण, जगण, भगण, लघु और गुरु हो तथा ११, १२ पर यति हो तो उस छन्द का नाम "अश्वललित" जानना ॥ ( उदा० ) यथा वा—

*** विलुलित-कपिशरेणुकपिशं प्रशान्तकलिकापलाशकुसुमं**
**कुसुमनिपातविचित्रवसुधां सशब्दनिपतद्द्रुमोत्कशकुनम् ।**
**शकुन-निनाद—नादित-ककुब्विलोलविपलायमानहरिणं**
**हरिण—विलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥(भट्टिः) १०४**

---

अस्येयं व्याख्या—हे ! आलि ! माधवमासि = चैत्र मासि वसन्तकाले इत्यर्थः, विकस्वराणि प्रफुल्लानि यानि केसरपुष्पाणि पुंनागसुमानि तेषां लसन्ती या मदिरा अर्थात् पुष्पमकरन्दरूपा तया मुदितैः = मत्तैः भृङ्गकुलः = भ्रमैरसमूहः उपगीतवने = गुञ्जितोद्याने तं वनमालिनं = श्रीकृष्णं = भज = सेवस्व । कीदृशम् कलानिलयम् = सकलकलानिधिम् तथा कुञ्जगृहोदेर = लतावलितभूमिमध्ये पल्लवैः = सद्यस्कैर्लतापत्रैः कल्पितं = रचितं तल्पं शय्यास्तरणं येन तम्, तथा—अनलपमनोजरसं = प्रचुरमन्मथविशिनम् । त्वं कीदृशी सती—माधविकानां वासन्तीलतानां मृदुनर्त्तनं यस्मात् तादृशो यो यामुनवातः = यमुनासीकरी समीरः तेन कृत उपगमः = अभिसरणाद्योगो यस्याःसा तादशीत्यर्थः ॥

* विलुलितेति—पवनात्मजो रिपुवनं बभञ्ज । कीदृशम् विलुलितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं, प्रशान्तानि अवसन्नानि कलिकाः, पत्राणि, पुष्पाणि च यत्र, कुसुमानां निपातेन विचित्रा वसुधा यत्र, सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैः उत्काः स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणो यत्र, शकुनानां पलायमानानां निनादेन नादिताः सञ्जातनादाः शब्दायमानीकृता वा ककुभो दिशो यत्र तत्, विलोलाः व्याकुलाः सन्तो विपलायमाना हरिणा यत्र तत्, हरिणस्येव विलोचने यस्याः सीतायाः तदाधिवसतिं तन्निवासस्थानम् ॥

म० म० त० न० न० न० न० ल०गु०

ऽऽ ऽ-ऽ ऽ ऽ-ऽ ऽ ।-। ।।-। ।।-।।।-।।।-। ऽ

**मत्ताक्रीडा मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुता ॥**

**यदि मौ=द्वौ मगणौ, त्नौ=तगणनगणौ, नौ=द्वौ नगणौ,न्लौ= नगणलघू ग् इति=अन्ते एको गुरुश्चेत् तदा वसु-शर-दश-यति-युता=अष्टभिः, पञ्चभिः=दशभिश्च यतिमती "मत्ताक्रीडा" इति नाम छन्दः उच्यते। क्वचित् "मत्ताक्रीडम्" इति नाम।**

**भाषा**—जिसमें दो मगण, एक तगण, चार नगण, एक लघु और एक गुरु हो तथा आठ८, पांच५, दश १० पर यति हो उस छन्द को "मत्ताक्रीडा" कहते हैं ॥ (उदा०) यथा वा—

**मुग्धोन्मीलन्मत्ताक्रीडं-मधुसमय-सुलभमधुरमधुरसा-**
**घ्राने याने किञ्चित्स्यन्दत्पदमरुण-नयनयुगलसरसिजम्।**
**रासोल्लासक्रीडत्कम्र-व्रजयुवति-वलयविहितभुजरसं**
**सान्द्रानन्दं वृन्दारण्ये-स्मरत हरि-मनघचरणपरिचयम् ॥१०५॥**

# अथ (२४) सङ्कृतिः—

भ० त० न० स० भ० भ० न० य०

ऽ।।-ऽऽ।-।।।-।।ऽ-ऽ ।।-ऽ। ।-। ।।-। ऽऽ

**भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी**

**यदि भतनाः=भगण-तगण-नगणाः, स्भौ=सगणभगणौ भनयाः=भगण-नगण-यगणाः च भवयुः तदा "तन्वी" नाम छन्दो भवति इह=अस्मिन् छन्दसि भूतमुनीनैः=पञ्चभिः सप्तभिः, द्वादशभिश्च यतिरिति ध्येयम्।**

**भाषा**—यदि (क्रमशः) भगण, तगण, नगण, सगण, भगण, (पुनः एक) भगण, यगण हो तो उस छन्द का नाम "तन्वी" होता है। इस में ५ पांच, ७ सात, १२ द्वादश पर यति जाननी चाहिये। (उदा०) यथा वा—

**माधव ! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः**
**कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा।**
**पद्मपलाशै र्विरचितशयना देहजसंज्वरभरपरिदूनै-**
**निश्वसति स्म मुहुरतिपरुषं ध्यायति ... तन्वी ॥१०६॥**

# अथ [२५] अतिकृतिः—

भ० म० भ० भ० न० न० न० न० गु०

ऽ।।-ऽ ऽ ऽ- ।। ऽ-ऽ ।।-।।-।।-।।।। ।।-ऽ

**क्रौञ्चपदा स्भौ स्भौ ननना न्गाविषुशरवसुमुनिरतिरिह भवेत् १०६**

यदि स्भौ=भगणमगणौ, स्भौ=सगणभगणौ ननना:=नगणत्रयम्, न्गौ=नगणगुरु च स्याताम् तदा इषुशरवसुमुनिविरतिः=पञ्चभिः पञ्चभिः, अष्टभिः, सप्तभिश्च विरतिर्यत्र सा तादृशी इह=शास्त्रे "क्रौञ्चपदा" नाम (छन्दो) भवेत्।

भाषा—यदि, (क्रमशः) भगण, मगण, सगण, भगण, चार नगण और अन्त में एक गुरु हो तो उसका नाम "कौञ्चपदा" जानना। इसमें ५ पांच, ५ पांच, ८ आठ, ७ सात पर यति का नियम है। (उदा०) यथा वा—

* क्रौञ्चपदाली-चित्रिततीरा-मदकल-खगकुलकल-कलरुचिरा
फुल्लसरोज-श्रेणि-विलासा मधुमुदितमधुप-रवरभसकरी।
फेनविलास-प्रोज्वलहासा-ललितलहरिभर-पुलकितसुतनुः
पश्य हरेऽसौ-कस्य न चेतो-हरिति-तरलगति-रहिमकिरणजा ॥१०६॥

# अथ [२६] उत्कृतिः—

म म० त० न० न० न० र० स० ल०गु०

ऽऽऽऽ ऽऽ-ऽऽ ।-।। ।-। ।।-।। ।-ऽ।ऽ-।। ऽ-ऽ-ऽ

**वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥१०७**

ममतनयुगनरसलगैः=मगण-मगण-तगण-नगण-नगण-

---

* क्रौञ्चपदालीति—असौ अहिमकिरणजा=सूर्यतनया कालिन्दी कस्य चेतो न हरति हे! हरे! इति त्वं पश्य (पश्य मृगो धावतीतिवत् वाक्यार्थस्य कर्मता) कीदृशीत्यपेक्षायां प्रथमान्तैस्तां विशिनष्टि—क्रौञ्चपदालीभिः=कुररपक्षिचरणैः चित्रितं तीरं यस्याः वस्तुतस्तु क्रौञ्चपदानां पक्षिविशेषाणां आलिभिः राजिभिरिति सुव्याख्येयम्। मदकलं-मदमत्तं यत् खगानां खेटानां कुलं तस्य कलकलरवेण रुचिरा मनोज्ञा, फुल्लानि विकासभाञ्जि यानि सरोजानि कमलानि तेषां श्रेण्या विलासो यत्र सा, मधुना पौष्पेन रसेन मुदिता ये मधुपाः मधुलिहः तेषां रवेण गुञ्जितेन रभसकरी तदाकुलितेत्यर्थः सा, फेनो डिण्डीरः तस्य विलास उद्गमनमेव प्रोज्वलो हासो यस्य सा, ललितो यो लहरिभरः तरङ्गसन्तानः तेन पुलकिता सुरोभिना तनुः शरीरं यस्याः सा तरलिता तरङ्गभङ्गाकुलेत्यर्थः॥

नगण-रगण-सगण-लघु-गुरुभिरित्यर्थः एतै रचितमिति यावत् यत्, तत् छन्दः "भुजङ्गविलसितम्" नाम। वस्वीशाश्वच्छेदोपेतम्-वसवोऽ=ष्टौ, ईशाः एकादश, अश्वाः=सप्त एतैः छेदेन यत्या उपेतं=युक्तमित्यर्थः।

**भाषा**—जिसमें (क्रमशः) दो २ मगण, एक तगण, तीन ३ नगण, एक १ रगण, एक १ सगण, एक १ लघु, तथा एक १ गुरु हो तो उस छन्द का नाम "भुजङ्गविलासित" होता है। इस में ८, ११, ७ पर यति का नियम जानना। (उदा०) यथा वा—

* हेलोदञ्चन्यञ्चत्पाद-प्रकट-विकट-नटनभरो-रणत्कर-तालक-
श्चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलय-स्तरङ्गितहारधृक्।
त्रस्यन्नागस्त्रीभिर्भक्त्या-मुकुलितकरकमलयुगं-कृतस्तुतिरच्युतः
पायान्नः छिन्दन्कालिन्दीह्रदे कृतनिजवसति बृह-द्भुजगविजृम्भितम्॥

म० न० न० न० न० न० न० स० गु० गु०

ऽ ऽ ऽ-।।।-। ।।-।।।-।।।-।।।-।।।-।।ऽऽऽ

**मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम्॥**

यदि मः=मगणः नाः षट्=षट् नगणाः, ततः सगग्=सगणः, द्वौ गुरू च भवेताम्, तथा नव-रस-रस-शरैः=नवभिः, षड्भिः, षड्भिः, पञ्चभिश्च (कृत्वा) या यतिः विरामः तया युतम् तत् "अपवाहाख्यम्"=अपवाह इति आख्यां नाम यस्य तत् छन्दो भवतीत्यर्थः।

**भाषा**—जब एक मगण, छः नगण, एक सगण तथा दो गुरु हों, और ९ नौ ६ छः, ५ पांच पर यति हो तो उसका नाम "अपवाह" होता है।

---

* "हेलो०" इति। अच्युतो नोऽस्मान् पायादिति सम्बन्धः। कथम्भूतः—हेलया लीलयैव उदञ्चन्यञ्चद्भ्यां उत्तानवितानाभ्यां पादाभ्यां प्रकटः प्रस्फुटः विकटो विलक्षणो नटनभरो नाट्यविलासो यस्य सः, पुनः—रणत् सशब्दं करतालकं यस्य, चारुः सुन्दरः प्रेङ्खन् चञ्चलः चूडाबर्हो यस्य, श्रुतौ कर्णे तरलं चपलं नवकिसलयं अवतंसीकृतं नवपल्लवं येन सः, तरङ्गितहारधृक्=नर्त्तनवशात् गतागते कुर्वन् यो हारः तस्य धारणकर्त्ता, त्रस्यन्तीभिः भीतिङ्गताभिर्नागस्त्रीभिः भक्त्या=प्रह्वीभावेन मुकुलितं करकमलयोर्युगं यस्यां क्रियायां तद्यथा स्यात्तथेति क्रियाविशेषणम्, कृता स्तुतिर्यस्य सः, पुनः—कालिन्दीह्रदे यमुनायाः सरोवरे कृता वसतिर्येन स चासौ यो बृहद्भुजङ्गः कालियनागः तस्य विजृम्भितं चेष्टितं छिन्दन् उद्ध्वंसयन्

इति उक्तादिप्रकरणम्।

समवृत्तप्रसङ्गेन समवृत्तरूपान् दण्डकानाह—

न० न० र० र० र० र० र० र० र०

। । ।-। । ।-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ

**यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः**

यत्=यदा इह=दण्डकजातौ नयुगलम्=नगणद्वयम्, ततः सप्त रेफाः=सप्त रगणाः स्युः तदा "चण्डवृष्टिप्रपातः" नाम दण्डको भवति।

**भाषा**—यदि दो ( २ ) नगण के अनन्तर सात ( ७ ) रगण हों तो वह "चण्डवृष्टिप्रताप" नामक दण्डक होता है। ( उदा० ) यथा वा—

प्रलयवनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया।
कमलनयनरत्तरत्तेतिगर्जत्त्रसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय नः ॥१०६॥

न० न० र० र० र० र० र० र० र० र०

। । ।-। । ।-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ ऽ । ऽ ऽ । ऽ-ऽ । ऽ

**प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः**

प्रतिचरणवृद्धरेफाः=प्रतिचरणं विवृद्धो रेफो रगणो यत्र ते तथा, तदा अर्ण-अर्णव-व्याल-जीमूत-लीलाकर-उद्दाम-शङ्खादयो भवन्ति। एषु एकोनसहस्राक्षरपर्यन्तपादनियमः कविसम्प्रदायसम्मतः। उक्तञ्च—

एकोन सहस्राक्षरपर्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः।
वर्णत्रिकगणवृद्ध्या न द्वितयाद्या महामतिभिः॥

**भाषा**—सब दण्डकों के आरम्भ में दो नगणों का होना आवश्यक है, उन दो नगणों के उत्तर सात से अधिक एक २ रगण को बढाते जायं तो अर्ण, अर्णव, व्याल, जीमूत, लीलाकर, उद्दाम, शङ्ख आदि अनेक दण्डक बन जाते हैं। अर्थात् आदि में दो नगण और आठ रगण हों तो "अर्ण" नौ रगण हों तो "अर्णव" दश रगण हों तो "व्याल" ग्यारह रगण हों तो "जीमूत", बारह रगण हों तो "उद्दाम" चौदह हों तो "शङ्ख" आदि नामवाले दण्डक होते हैं। इस की वृद्धि एकोनहजार अक्षर के पादपर्यन्त कविसम्प्रदायानुसार जाननी।

न० न० य० य० य० य० य० य० य०

। । ।–। । ।–। ऽ ऽ–। ऽ ऽ—। ऽ ऽ । ऽ ऽ। ऽ ऽ। ऽ ऽ ऽ। ऽ ऽ

**प्रचितकसमभिधो धीरधीभिःस्मृतो दण्डको नद्वयादुत्तरैःसप्तभिर्यैः**

**नद्वयात्=नगणद्वयात् उत्तरैः=परवर्त्तिभिः सप्तभिः यैः=यगणैः रचितः धीरधीभिः=छन्दोविद्भिः "प्रचितकसमभिधः" दण्डकः स्मृतः=उक्तः ॥**

**भाषा**—यदि दो नगणों के उत्तर सात यगण हों तो उसको छन्दः शास्त्र के पण्डित "प्रचितक" नाम दण्डक कहते हैं। ( उदा० ) यथा वा—

मुरहर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकीगर्भरत्न ! त्रिलोकैकनाथ !
प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केसरीन्द्र !
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार !
प्रणतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद ॥११०॥

एवमेव **श्यामलादण्डका**दिकाव्यं ज्ञेयम् ।

इति समवृत्ताख्यस्तृतीयोऽध्यायः

---

# अथ चतुर्थोऽध्यायः

**उक्तानि समवृत्तानि, सम्प्रति अर्धसमानि वक्तुकामः चतुर्थाध्यायमारभते तत्रादौ उपचित्रलक्षणमाह–विषमे इति ।**

स० स० स० ल०गु० भ० भ० भ० गु०२

। । ऽ–। । ऽ—। । ऽ–।–ऽ—ऽ । ।—ऽ । ।–ऽ । ।–ऽ–ऽ

**विषमे यदि सौ सलगा दले। भौ युजि भाद्गुरुकावुपचित्रम् ॥१**

**यदि विषमे दले=प्रथमे तृतीये च पादे सौ=द्वौ सगणौ ततः सलगाः=सगणलघुगुरवः स्युः, युजि=समे द्वितीये चतुर्थे च पादे भौ=द्वौ भगणौ, पुनः भात्=भगणात् ( अर्थात् तृतीयभगणात् ) गुरुकौ=द्वौ गुरू स्याताम् तदा "उपचित्रम्" नाम छन्दः। द्विरावृत्या श्लोकः पूरणीयः।**

**भाषा**—यदि विषम = प्रथम, तृतीय पाद में ३ तीन सगण, एक लघु तथा एक गुरु हो और सम=द्वितीय चतुर्थ पाद में तीन भगणों से उत्तर दो गुरु हों तो उस छन्द को "उपचित्र" कहते हैं। (उदा०) यथा वा—

* मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनालिप्तम्।
गगनं चपलामिलितं यथा शारदनीरधरै-रुपचित्रम्॥ १॥

भ० भ० भ० . गु०२ न० ज० ज० य०

ऽ।।-ऽ।।-ऽ।।-ऽ ऽ——।।।-।ऽ।-।ऽ।-।ऽऽ

**भत्रयमोजगतं गुरुणी चेत्। युजि च नजौ ज्ययुतौ द्रुतमध्या॥२**

ओजगतम्=विषमपादगतं भत्रयम्=त्रयो भगणाः गुरुणी च=द्वे च गुरुणी अक्षरे (द्वौ गुरू इत्यर्थः) युजि=समे पादे नजौ=नगणजगणौ ज्ययुतौ=जगण-यगणयुक्तौ स्याताम् चेत् सा "द्रुतमध्या" नाम छन्दः।

**भाषा**—यदि विषम पादों में तीन भगण और दो गुरु, तथा समपादो में एक नगण, दो जगण, और एक यगण हो तो उस छन्द का नाम "द्रुतमध्या" होता है। (उदा०) यथा वा **मम**—

ऽ।।ऽ।।ऽ।।ऽऽ
नैव यदा रमणी रसपूर्णा
।।।।ऽ।।ऽ।।ऽऽ
भवति मनोजसरोजसुगन्धिः।
ऽ ।। ऽ।।ऽ। ।ऽऽ
किं? वद! पौरुषमस्ति नराणां
।।।।ऽ।।ऽ।।ऽऽ
बलकरकामयुतामपि लोके॥ २॥

स० स० स० गु० भ० भ० भ० गु०२

।।ऽ-।।ऽ-।।ऽ-ऽ . ऽ।।-ऽ।।-ऽ-।।-ऽऽ

**सयुगात्सगुरू विषमे चेत्। भाविह वेगवती युजि भाद्गौ ३**

चेत्=यदि विषमे=प्रथमे तृतीये पादे सयुगात्=सगण-द्वयात् परं सगुरू=सगणगुरू स्याताम्, अथ युजि=समे द्वितीये चतुर्थे च भौ=द्वौ भगणौ, पुनः भात्=भगणात् (तृतीयभगणात्)

* मुरवैरिः=श्रीकृष्णः तस्य वपुः शरीरं मुदं=हर्षं तनुताम् कीदृशम्—हेमनिभं=सुवर्णसदृशं यदंशुकं वस्त्रम् अर्थात् पीतं वासो यत्र तत् तथा चन्दनलिप्तम्, यथा शारद नीरधरैः शरत्कालीनैर्मेघैः उपचित्रम्=संभिन्नं चपलामिलितं=विद्युत्समचितं गगनम्=आकाशं तद्वदित्यर्थः।

गौ = द्वौ गुरू च भवेताम् तदा इह = छन्दःशास्त्रे "वेगवती" नाम छन्द उच्यते ।

**भाषा**—यदि विषमपादों में दो सगणों से परे एक सगण अर्थात् आदि में तीन सगण और एक गुरु हो और सम = द्वितीय चतुर्थ पाद में तीन भगणों से परे दो गुरु हों तो उस छन्द को इस शास्त्र में "वेगवती" कहते हैं। (उदा०) यथा वा—

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।
रभसान्न गुरूनगणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ ३ ॥

त० ज० र० गु० म० स० ज० गु०२

SS I-I S I S I S-S——S S S-I I S—I S I-S S

**ओजे तपरौ जरौ गुरुश्चेत् । म्सौ ज्गौ भद्रविराड् भवेदनोजे ॥४॥**

चेत् = यदि ओजे = विषमे पादे तपरौ = तगणात् परौ जरौ = जगणरगणौ, गुरुश्च स्यात् अनोजे = समे पादे म्सौ = मगणसगणौ ज् = जगणः, गौ = द्वौ गुरू च स्तः तदा "भद्रविराट्" इति नाम छन्दः ।

**भाषा**—यदि विषम पादों में तगण, जगण, रगण और एक गुरु हो, एवं समपादों में मगण, सगण, जगण और दो गुरु हों तो उस छन्द का नाम "भद्रविराट्" होता है। ( उदा० ) यथा वा—

S S I I S I S I S S
कृष्णां कुरुसागरेऽति मग्नां
S S S I I S I S I S S
ध्यायन्तीं चरणं परञ्च ह्रीणाम् ।
S S I I S I S I S S
यो रचितवान् यदूत्तमेशः
S S S I I S I S S S I
कृष्णोऽसौ मम हन्तु कश्मलानि ॥ ४ ॥

स० ज० स० गु० भ० र० न० गु०गु०

I I S-I S I-I I S-S S I I-S I I-I I I-S-S

**असमे सजौ सगुरुयुक्तौ । केतुमती समे भरनगाद्गः ॥५॥**

यदि असमे = विषमे (१,३) पादे सजौ = सगणजगणौ सगुरु-

* "ह्रीणाम्" इत्यतः पूर्वं संयुक्तपरत्वे अपि चस्य लघुतैव "प्रह्वे वा" इत्युक्तेः ।
† पादान्तस्थत्वात् लघोरपि "ति" इत्यस्य गुरुत्वमेव ।

युक्तौ = सगणगुरुभ्यां सहितौ भवेताम्, समे = (२,४) पादे भरनगात्= भगण-नगण-रगण-गुरुतः उत्तरं गः = एको गुरुः स्यात् तदा "केतुमती" इत्युच्यते।

भाषा—यदि विषमपादों में सगण, जगण, सगण, अन्त में एक गुरु, और समपादों में भगण, नगण, रगण से परे दो गुरु हों तो उसको "केतुमती" कहते हैं। (उदा०) यथा मम—

I I S I S I I I S S
यदुपुङ्गवाय नमताद्धा !
S I I I I I S I S S S
रचति सकलमङ्ग ! यो नित्यम्।
I I S I S I I I S S
इतरे तु सन्ति कृपेणान्द्धाः
S I I I I I S I S S S
स्वार्थ-परमनसो महावर्त्ताः ॥ १ ॥

त० त० ज० गु०गु० ज० त० ज० गु०गु०

S S I-S S I-I I S—S-S——I S I-S S I-I S I-S-S

**आख्यानकी तौ जगुरू ग ओजे। जतावनोजे जगुरू गुरुश्चेत् ॥**

ओजे = विषमे पादे तौ = द्वौ तगणौ, जगुरू = जगणगुरू च स्तः, गः = पुनरेको गुरुश्च भवेत्, अनोजे = समे पादे जतौ=जगण-तगणौ जगुरू = जगणगुरू च स्याताम् अन्ते पुनः एको गुरुश्चेत्? तदा सा "आख्यानकी" नाम कथ्यते।

भाषा—यदि विषमपादों में दो तगण, एक जगण, दो गुरु हों और सम = द्वितीय चतुर्थ में जगण तगण, पुनः जगण और अन्त में दो गुरु हों तो उस छन्द को "आख्यानकी" कहते हैं।

ज० त० ज० गु०गु० त० त० ज० गु०गु०

I S I-S S I-I S I-S-S——S S I-S S I-I S I-S-S

**जतौ जगौ गो विषमे समः स्यात्। तौ ज्गौ ग एषा विपरीतपूर्वा**

विषमे=प्रथमे तृतीये च पादे जतौ=जगणतगणौ जगणगुरू च स्याताम् अथ गः=एको गुरुश्च भवेत्, समे=द्वितीये चतुर्थे पादे तौ=द्वौ तगणौ, ज्गौ=जगणगुरू गः=पुनरेको गुरुश्चेत् सा विपरीत-पूर्वा=" विपरीताख्यानकी " इत्यर्थः। अनयोरुभयोरप्यन्तर्भावेऽपि

विशेषसंज्ञाविधानार्थमर्धसमाध्याये पाठ इति भट्टः । एवञ्चानयोरुदाहरणे ऊहनीये । अथवा—

आख्यानकी स्यात् प्रकटीकृतार्थे
यदीन्द्रवज्रा चरणः पुरस्तात् ।
उपेन्द्रवज्रा चरणा स्त्रयोऽन्ये
मनीषिणोक्ता विपरीत-पूर्वा ॥

**भाषा**—विषमपादों में जगण, तगण, पुनः जगण और दो गुरु हों, तथा समपादों में ( पहले ) दो तगण, जगण, और पुनः दो गुरु हों तो उस का नाम "विपरीताख्यानकी" होता है॥७॥

स० स० स० ल०गु० न० भ० भ० र०

। । ऽ–। । ऽ–। । ऽ–।–ऽ——। । । ऽ । ।–ऽ । ।–ऽ । ऽ

**सयुगात्सलघू विषमे गुरुः युजि नभौ च भरौ हरिणप्लुता**

विषमे = प्रथमे तृतीये च पादे सयुगात् = सगणद्वयात् सलघू = सगणलघू , गुरुः = एकश्च गुरुः स्यात् । युजि=समे पादे नभौ = नगण–भगणौ, भरकौ = भगणरगणौ च स्याताम् तदा सा " हरिणप्लुता " इत्युच्यते ।

**भाषा**—विषम पादो में तीन सगण एक लघु और एक गुरु हो, एवं समपादों में एक नगण, दो भगण और एक रगण हो तो उस छन्द को " हरिणप्लुता " कहते हैं । ( उदा० ) यथा वा—

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥ ८ ॥

न० न० र० ल०गु० न० ज० ज० र०

। । ।–। । । ऽ । ऽ—।–ऽ——। । ।। ऽ–।–। ऽ ।–ऽ । ऽ

**अयुजि ननरला गुरुः समे । न्जमपरवक्त्रमिदं ततो जरौ ॥९॥**

अयुजि=विषमे पादे ननरलाः=नगण–नगण–रगण–लघवः गुरुश्च स्यात् समे=द्वितीये चतुर्थे च न्जं=नगणजगणौ, ततः जरौ= जगणरगणौ च स्याताम् तदा इदम् " अपरवक्त्रं " नाम छन्दो ज्ञेयम् ।

**भाषा**—जब विषम पादों में ( प्रथम ) दो नगण, पुनः एक रगण, एक लघु, एक गुरु हो, और समपादों में एक नगण से परे दो जगण और एक रगण हों तो उस को "अपरवक्त्र" कहते हैं ।

न० न० र० य० न० ज० ज० र० गु०

। । ।-। । ।-ऽ । ऽ-। ऽ ऽ । । ।-। ऽ ।-। ऽ । ऽ । ऽ-ऽ

**अयुजि नयुगरेफतो यकारो। युजि च नजौ जरगाश्च पुष्पिताग्रा**

अयुजि = विषमे पादे नयुगरेफतः = नगण-नगण-रगणात् परतः यकारः = यगणः स्यात्, युजि=समे पादे नजौ = नगणजगणौ, जरगाः = जगण-रगण-गुरवश्च स्युः तदा "पुष्पिताग्रा" नाम छन्द उच्यते।

**भाषा**—यदि विषम पादों में दो नगणों से परे एक रगण, एक यगण हो और समपादों में एक नगण, दो जगण, एक रगण और अन्त में एक गुरु हो तो वह छन्द "पुष्पिताग्रा" कहाता है। (उदा०) यथा वा—(अस्मद्गुरुचरणानाम्)

* भुवनधव! महाङ्गपाल!
त्वयि सततं ससुते समेतु भव्यम्।
अनिशमिदमहं समीहमानो
भगवत एव भवामि भव्यदातुः †॥

**वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।**
**पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं परे॥ १०॥**

विपश्चितः = पण्डिताः अपरवक्त्राख्यं वैतालीयमेव वदन्ति पुष्पिताग्राभिधं छन्द औपच्छन्दसिकमेव वदन्ति।

र० ज० र० ज० ज० र० ज० र० गु०

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ-ऽ

**स्यादयुग्मके रजौ रजौ समे तु जरौ जरौ गुरुर्यदा यवान्मतीयम् ११**

अयुग्मके=विषमे पादे रजौ=रगण-जगणौ, पुनः रजौ=रगण-जगणौ च स्याताम्, समे = द्वितीये चतुर्थे च जगण-रगणौ, पुनः

---

* श्रीलोकनाथो नाम रावलपिण्डीवास्तव्योऽस्माकं सतीर्थ्योऽभूत्। तम्प्रति गुरुभिरेकदा पत्रं प्रहितमासीत् तत्रत्यमिदं पद्यम्।

† यथा वा—(श्रीमद्भागवते) तृतीयस्य चतुर्थे—

इति सह विदुरेण विश्वमूर्त्ते—
र्गुणकथया सुधया प्लावितोरुतापः।
क्षणमिव पुलिने यमस्वसुस्तां
समुषित औपगविर्निशां ततोऽगात्॥

**जरौ = जगणरगणौ च स्यातां अन्ते गुरुश्चैकश्चेत् ? तदेवम् यवात् = यवशब्दात् परा मती = " यवमती " नाम छन्द इत्यर्थः ।**

**भाषा**—यदि–विषम पादों में ( क्रमशः ) रगण, जगण, पुनः रगण, एक जगण हो और समपाद में जगण, रगण, जगण, रगण से परे एक गुरु हो तो उस छन्द का नाम "यवमती" होता है । ( उदा० ) यथा वा—

ऽ।ऽ ।ऽ। ऽ।ऽ ।ऽ ऽ

**मायया वितत्य सर्वमद्भुतं यो**

।ऽ । ऽ।ऽ।ऽ।ऽ ।ऽऽ

**निलीय तत्र रूपवानिव स्वयन्ता ।**

ऽ।ऽ।ऽ।ऽ।ऽ।ऽऽ

**वस्तुतो न रूपतां गतो ह्यसङ्गः**

।ऽ। ऽ। ऽ।ऽ।ऽ।ऽऽ

**शरीर तो विभिन्नतां गतः प्रतीतः ॥**

अत्रैव केचित् " वियोगिनीं" पठन्ति—

" **विषमे ससजा समे गुरुः सभरा लोऽथगुरुर्वियोगिनी** " इति तल्लक्षणात् । उदाहरन्ति च—

**यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ।**

**अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ (भारविः)**

अस्य एव " सुन्दरी" इत्यपरं नाम ॥

॥ इति चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः ।

उक्तान्यर्धसमानि वृत्तानि, संप्रत्युद्देशक्रमानुरोधेन विषमवृत्तान्यभिधातुं पञ्चमोऽध्याय आरभ्यते ।

१ २ ३ ४ ५ ६ ७ ८

**मुखपादोऽष्टभिर्वर्णैः ॥**

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२

**परेस्मान्मकरालयैः क्रमाद् वृ द्धाः ॥**

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११-१२ १३ १४ १५ १६

**सततं यस्य विचित्रैः पादैः सम्प न्न सौ न्द र्यं ॥**

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०

**त द भि हि तममलधीभिः प द च तु रू र्ध्वा भि धं वृ त्त म् ॥**

"मुखपाद" इति । यस्य = वृत्तस्य मुखपादः = प्रथमः पादः अष्टभिर्वर्णैः स्यादिति शेषः। अस्मात् = मुखपादात् परे=द्वितीयाद्याः पादाः मकरालयैः = समुद्रैः चतुर्भिः क्रमाद्वृद्धैः अक्षरैः सततम् = नैरन्तर्येण स्युः तत् वृत्तम् = छन्दः अमलधीभिः = निर्मलमतिभिः पिङ्गलादिभिराचार्यैः "पदचतुरुर्ध्वाभिधम्" नाम अभिहितम् = कथितम् कीदृशम्—विचित्रैः = विलक्षणैः पादैः सम्पन्नसौन्दर्यम् = सम्पन्नं जातं सौन्दर्यं यस्य तादृशम् । अत्र—"सम्पन्नसौन्दर्यम्" इति कथितेन "गुरुलघुनिवेशनियमो नास्ति" इति सूचितम्।

प्रथमपादोऽष्टाक्षरः, द्वितीयो द्वादशाक्षरः, तृतीयः षोडशाक्षरः, चतुर्थो विंशत्यक्षर इति निर्गलितोऽर्थः।

भाषा—जिस छन्द का प्रथम पाद ८ अक्षरों का, दूसरा १२ अक्षरों का, तीसरा षोडश १६ अक्षरों का और चौथा २० विंशति अक्षरों का हो उसको "पदचतुरूर्ध्व" कथन करते हैं। इसमें गुरु, लघु अक्षरों के निवेश का नियम नहीं, किन्तु रचनासौन्दर्य का ध्यान रखना आवश्यक है।

पदचतुरूर्ध्ववृत्तस्यैव प्रतिपादान्ते गुरुद्वयनिवेशे सञ्ज्ञान्तरमाह—

गु०२

१ २ ३ ४ ५ ६ ७ ८
प्रथम मुदित वृत्ते।

गु०२

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
विरचित विषम चर ण भा जि॥

गु०२

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
गुरुक युगल निधन इ ह क लि त आ ङा।

गु०२

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
विधृतरुचिरपदवित ति य ति रि ति भ व ति पी डः ॥२॥

इह विरचितविषम चरणभाजि = विचरचितान् विषमसंख्याकातान् चरणान् भजतीति तादृशे प्रथमम् उदिते वृत्ते=

प्रथमोक्ते पदचतुरूर्ध्वाभिधे वृत्ते गुरुकयुगलनिधने = गुरुरेवगुरुकं, गुरुयुग्मं निधने अवसाने यस्य तादृशे सति इति = इत्थं प्रकारेण आङा = उपसर्गेण कलितः = सहितः पीडः = "आपीड" इत्याख्यं छन्दो भवतीत्यर्थः । कथम्भूत आपीडः—विधृतरुचिरपदविततियतिः = विधृता सम्पादिता रुचिरा हृद्या पदानां वितत्या यतिर्यत्र स तथाविधः ।

**भाषा**—यदि उक्त "पदचतुरूर्ध्व" छन्द के प्रत्येक पादके अन्त में दो २ वर्णों को गुरु किया जाय तो उसका नाम "आपीड" जानना चाहिये ॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
प्रथम मितर चरण स मु त्थं ।
१ २ ३ ४ ५ ६ ७ ८
श्रयति जगति लक्ष्म ॥
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
इतर दितर जनित म पि य दि च तु र्यं ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
चरणयुगलकमधिकृत म प र मि ति क लि का सा ॥३॥

यदि प्रथमं तुर्यम् = प्रथमश्चरणः इतरचरणसमुत्थम् = द्वितीय चरणगतं लक्ष्म = लक्षणं श्रयति, इतरत् = द्वितीयम् अपि इतरगदितम् = प्रथमपादोक्तं लक्षणं श्रयति, यदि च अपरम् = चरणद्वयं तृतीयचतुर्थरूपम् अविकृतम् = यथावस्थितमेव स्यात् इति = अर्थात् अनया रीत्या स आपीड एव सा = प्रसिद्धा "कलिका" नाम छन्दो भवन्तीत्यर्थः । अस्यायमाशयः—यदि प्रथमः पादो द्वादशाक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः षोडशाक्षरः, चतुर्थो विंशत्यक्षरः तदा "कलिका" नामेत्युच्यते । इमामेव "मञ्जरी" इति नाम्ना व्याहरन्ति । अत्र तुर्यपदेन श्लोकचतुर्थांशः पादो ग्राह्यः॥

**भाषा**—यदि आपीड का प्रथमचरण द्वितीय चरण के लक्षणवाला और द्वितीय प्रथमचरण के लक्षणवाला हो अर्थात् द्वितीय पाद को प्रथम पाद के स्थान पर तथा प्रथम पाद को द्वितीय के स्थान पर कर लिया जाय और शेष तृतीय, चतुर्थ पाद ज्यों के त्यों रहें तो उसको "कलिका" कहते हैं। पिङ्गल सूत्र में इस का नाम "मञ्जरी" है।

सारांश यह है कि—"कलिका" छन्द में प्रथम पाद १२ अक्षर, द्वितीय पाद ८ अक्षर तृतीय पाद १६ अक्षर, चतुर्थ पाद २० अक्षर का होता है।

गु०२

१२३ ४५ ६७८ ९ १० ११ १२
द्विगुरुयुत सकल च र णा न्ता।

गु०२

१२ ३४५ ६७८ ९ १० ११ १२ १३ १४ १५ १६
मुख चरण रचित म नु भ व ति तृ ती यः॥

गु०२

१२३ ४५ ६ ७८
चरण इह हि लक्ष्म।

गु०२

१२३४५६७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
प्रकृतम परम खि ल म पि य दि भ ज ति ल व ली सा

दि तृतीयः चरणः मुखचरणरचितम्=प्रथमपादोक्तं अष्टाक्षरस्वरूपं लक्ष्म=लक्षणम् अनुभवति=तद्युक्तो भवतीत्यर्थः, अपरम्=पादत्रयम् प्रकृतम्=प्रस्तुतम् अखिलम्=समग्रमपि आपीड-लक्षणं भजति=श्रयते तदा हि=निश्चयेन इह=शास्त्रे सा=प्रसिद्धा "लवली" नाम छन्दः। कीदृशी-द्विगुरुयुतसकलचरणान्ता=द्वाभ्यां गुरुभ्यां युतः युक्तः सकलचरणानाम् अन्तः अवसानं यस्याः सा तादृशी। अत्र—प्रथमः पादो १२ द्वादशाक्षरः, द्वितीयः १६ षोडशाक्षरः, तृतीयो ८ अष्टाक्षरः, चतुर्थो २० विंशत्यक्षरः इति सारः।

**भाषा**—यदि (लवली का) तृतीय पाद आपीड के प्रथमपादोक्त लक्षण से युक्त हो या यों कहो कि—अष्टाक्षरपाद तृतीय पाद के स्थान पर, द्वादशाक्षर (तृतीय) पाद प्रथम पाद के स्थान पर हो और शेषपाद = द्वितीय, चतुर्थपाद पूर्ववत् हों तो उसका नाम "लवली" हो जाता है, परन्तु सब पादों के अन्त में दो गुरु अक्षर अवश्य होने चाहिये।

सार यह कि—जब प्रथम पाद में १२, द्वितीय में १६, तृतीय में ८, चतुर्थ में २० अक्षर हों उसका नाम "लवली" ...

गु० २

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
प्र थ म म धि व स ति य दि तु र्यं।

गु० २

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
च र म च र ण प द म व सि त गु रु यु ग्मा॥

गु० २

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
निखिल म प र मु प रि त न स म मि ह ल लि त पा दा।

गु० २

१ २ ३ ४ ५ ६ ७ ८
त्रि त य म मृ तधारा ॥५॥

यदि प्रथमतुर्यम्=प्रथमपादोऽष्टाक्षरात्मकः चरमचरणपदम्=चतुर्थपादस्थानम् अधिवसति=प्राप्नोति अर्थात् चतुर्थपादरूपेण भवति, चतुर्थः पादोऽष्टाक्षरात्मको भवतीति यावत् निखिलम्=समग्रम् अपरम्=पादत्रयम् उपरितनसमम्=आपीडस्थद्वितीयपादादितुल्यं स्यात् तदा अवसितगुरुयुग्मा=अवसिते अवसाने गुरुयुग्मं यस्याः सा तादृशी ललितपादा=हृद्यपदरचितपादा इह=छन्दःशास्त्रे "अमृतधारा" नाम छन्द उच्यते। प्रथमः पादो द्वादशाक्षरः, द्वितीयः षोडशाक्षरः, तृतीयो विंशत्यक्षरः, चतुर्थोऽष्टाक्षरश्चेद् "अमृतधारा" सेति सारः।

**भाषा**—यदि आपीड छन्द का प्रथम अष्टाक्षरपाद चतुर्थ पाद के स्थान पर किया जाय, शेष पाद ज्यों के त्यों हों, और पाद के अन्त में नियम से दो गुरु वर्ण कर दिये जायं तो उसका नाम "अमृतधारा" जानना। प्रथम पाद में १२ द्वितीय में १६, तृतीय पाद में २०, चतुर्थ में ८ होने से "अमृतधारा" कहाती है।

इति पदचतुरूर्ध्वप्रकरणम्

अधुना अन्यान्यपि विषमवृत्तान्युच्यन्ते—

स० ज० स० ल० न० स० ज० गु०

।। ऽ-।ऽ ।-। । ऽ—।— ।।।।।ऽ-।ऽ।ऽ

**सजमादिमे सलघुकौ च । नसजगुरुकेष्वथोद्गता ॥**

भ० न० ज० ल०गु० स ज० स० ज० गु०

ऽ । ।-। ।।-।ऽ ।-।-ऽ—-।।ऽ-।ऽ।।।ऽ-।ऽ।-ऽ

**त्र्यङ्घ्रिगतभनजला गयुताः । सजसा जगौ चरणमेकतः पठेत्**

**आदिमे प्रथमे पादे सजम् = सश्च जश्च अनयो समाहारः सजम् = सगणजगणावित्यर्थः सलघुकौ च = सश्च लघुकश्च तौ सगणलघू च स्याताम् अर्थात् प्रथमे पादे सगण-जगण-सगणलघवः कार्याः अथ = अनन्तरम् द्वितीये पादे नसजगुरुकेषु = नगण-सगण-जगण-गुरुषु सत्सु त्र्यङ्घ्रिगतभनजलाः = त्रयाणां पूरणे अङ्घ्रौ पादे तृतीये पादे गताः स्थिता ये भगण-नगण-जगण-लघवः ते गयुताः = गुरुयुक्ताः कार्याः । परिशेषे चतुर्थे पादे-सजसा = सगण-जगण-सगणाः जगौ = जगण-गुरू च भवतः । एवं सति चरणम् = प्रथमं पादम् एकतः = एकीकृत्य पठेत् अर्थात् प्रथमं पादं द्वितीयेनैकीकृत्य उच्चारयेदित्यर्थः । प्रथमद्वितीयपादौ बहुविलम्बेन न पठेत् अत्यन्तयतिं न कुर्यादित्याशयः, एवं कृते लक्षणे " उद्गता " नाम छन्दो ज्ञेयम् ॥ १ ॥**

**भाषा**—यदि प्रथम पाद में–सगण, जगण, सगण, एक लघु हो, द्वितीय पाद में–नगण, सगण, जगण और एक गुरु, तृतीय पाद में भगण, नगण, जगण, लघु, और एक गुरु हो, तथा चतुर्थ पाद में–सगण, जगणं, सगण, जगण अन्त में एक गुरु हो, परन्तु प्रथम पाद और द्वितीय पाद के मध्य में विशेष यति न करें अर्थात् उन को मिलाकर पढ़ा जाय तब उस वृत्त को " उद्गता " कहते हैं । ( उदा० )

यथा वा—

**किरातार्जुनीयस्य द्वादशः सर्गः तथाहि तस्येदमादिमं पद्यम् ॥**

।। ऽ। ऽ। ।।ऽ।

**अथ वास वस्य वचनेन**

।।। ।।ऽ । ऽ।ऽ

**रुचिर वदन स्त्रिलोचनम् ।**

ऽ ।।।।।ऽ।।ऽ

**क्लान्ति रहितमभिराधयितुं**

। । S । S । । । S । S । S

विधिवत्तपांसि विदधे धनञ्जयः ॥ १ ॥

स० ज० स० ल० न० स० ज० गु०

। । S-। S ।-। । S ।—। । ।-। । S-, S । S

चरणत्रयं भजति लक्ष्म । यदि सकलमुद्गतागतम् ॥

र० न० भ० गु० स० ज० स० ज० गु०

S । S । । ।—S । । S— । । S । S ।-। । S-। S । S

नौं भगौ भवति सौरभकं । चरणे यदीह भवतस्तृतीयके ॥२॥

यदि इह तृतीयके = तृतीये पादे नौं = रगणनगणौ भगौ = भगणगुरू च भवतः = स्याताम्, अपरं तृतीयवर्जं समग्रम् चरणत्रयम् = प्रथम-द्वितीयचतुर्थरूपम् उद्गतागतम् उद्गतास्थितं = सकलम् = समग्रं लक्ष्म = लक्षणम् भजति = प्राप्नोति तदा "सौरभकम्" नाम वृत्तमुच्यते ।

**भाषा**—जब तृतीय पाद में रगण, नगण, भगण तथा एक गुरु हो और शेष तीनों पाद = प्रथम, द्वितीय, चतुर्थ पाद उद्गता के लक्षण वाले हों तो उस छन्द को " सौरभक " कहते हैं ।

स० ज० स० ल० न० स० ज० गु०

। । S-। S ।-। । S-।—। । । । । S । S ।-।

नयुगं सकारयुगलं च । भजति चरणं तृतीयकम् ।

न० न० स० स० स० ज० स० ज० गु०

। । ।-। S ।-। । S-। । S—। । S-। S ।-। । S । S । S

तदुदितमुरुमतिभिर्ललितं । यदि शेषमस्य खलु पूर्वतुल्यकम् ॥३

यदि तृतीयकं चरणम् = तृतीयः पादः नयुगम् = नगणद्वयम्, सकारयुगलम् = सगणद्वयञ्च भजति = आश्रयते, शेषम् = अपरञ्च पादत्रयम् प्रथम-द्वितीय-चतुर्थात्मकं खलु = निश्चयेन अस्य पूर्वतुल्यकम् = उद्गतावत् स्यात् तदा तत् = छन्दः उरुमतिभिः = विशालबुद्धिभिः " ललितम् " नाम उदितम् = कथितम् ।

भाषा—यदि तृतीय पाद में दो नगण, दो सगण हों और शेष सब पाद उद्गता के लक्षणवाले हों तो छन्दःशास्त्रवेत्ता उसको "ललित" कथन करते हैं ॥ ३ ॥

इत्युद्गताप्रकरणम्

म० स० ज० भ० गु०२

S S S—I I S—I S I—S I I—S S

म्सौ ज्गौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत् ॥

स० न० ज० र० गु०१

I I S—I I I—I S I—S I S—S

त्रितयं सनजरगास्तथा ननौ सः

न० न० स०

I I I—I I I—I I S

त्रिनपरिकलितजयौ ॥

न० न० न० ज० य०

I I I—I I I—I I I—I S I—I S S

प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ १ ॥

म्सा = मगणसगणौ, ज्भौ = जगण भगणौ गौ = द्वौ गुरू च (इत्येवम्) एकतः=एकः प्रथमाङ्घ्रिः=प्रथमश्चरणः पृथक्=द्वितीयादिपादात् पृथक्कृत्य पठनीय इत्यर्थः। अतः अन्यत् त्रितयम् = पादत्रयम् द्वितीयादि एकीकृत्यैव पठनीयम् नतु तत्र विरामोविधेयः। कीदृशं तच्चरणत्रयम् इत्यपेक्षायामाह-सनेति। सनजरगाः = सगण नगण-जगण-रगण-गुरवः द्वितीये पादे कार्याः। ननौ = नगणौ, (द्वौ नगणौ) सः = सगणश्च एते तृतीये पादे देयाः। त्रिनपरि कलितजयौ = त्रयश्च तेनाश्चेति त्रिनाः तैः त्रिभिर्नगणैः परिकलितौ सहितौ यौ जयौ = जगण-यगणौ तौ चतुर्थे पादे कार्यौ, एवं कृते उपस्थितपूर्वम् इदम् प्रचुपितम् उदितम् = "उपस्थितप्रचुपितं" नाम छन्द उक्तमित्यर्थः।

भाषा—यदि प्रथमपाद में मगण, सगण, जगण, भगण, और दो गुरु हों पर

वह पाद पृथक् करके ही पढा जाय, शेष तनि पादों को मिलाकर पढ़ें, परन्तु द्वितीय पाद में सगण, नगण, जगण, रगण एक गुरु हो, तृतीय पाद में दो नगण, एक सगण, और चतुर्थ पादमें ३ तीन नगणों के अनन्तर क्रमशः एक जगण, एक यगण हो तो उसका नाम "उपस्थितप्रचुपित" जानना ।

म० स० ज० भ० गु०२ स० न० ज० र० गु०

S S S I I S—I S I—S I I—S S—I I S—I I I—I S I—S I S S

**नौ पादेथ तृतीयके सनौ नसयुक्तौ । प्रथमाङ्घ्रिकृतयतिस्तुवर्धमानम्**

न० न० स० न० न० स० न० न० न० ज० य०

I I I—I I I—I I I S I I I—I I I I I S I I I I I I I I I I S—I I S S

**त्रितयमपरमपि पूर्वसदृशमिह भवति । प्रततमतिभिरितिगदितं खलु वृत्तम्**

**तृतीयके = तृतीये पादे नौ = द्वौ नगणौ अथ = ततः सनौ = सगणनगणौ = परन्तु तौ नसंयुक्तौ = नगणमगणाभ्यां सहितौ स्याताम् प्रथम-द्वितीय-चतुर्थात्मकम् पूर्वसदृशम् = उपस्थित-प्रचुपिततुल्यमेव भवति = भवेदित्यर्थः इति = अमुना प्रकारेण प्रततमतिभिः=प्रख्यातबुद्धिभि खलुः = निश्चयेन तत् वृत्तम् = छन्दः "वर्धमानम्" नाम गदितम् = कथितम् । कीदृशं तत् प्रथमाङ्घ्रि-कृतयति = प्रथेम अङ्घ्रौ चरणे कृतायतिर्यस्मिन् तत् ।**

**भाषा**—जिसके तृतीय पादमें दो नगण के अनन्तर एक सगण, पुनः नगण, नगण तथा एक सगण हों शेष तीन पाद "उपस्थितप्रचुपित" के तुल्य हों, परन्तु प्रथम पाद में ही यति की जाय शेष तीनों पाद मिलाकर पढे जायं तो उस छन्द का नाम "वर्धमान" होता है ।

म० स० ज० भ० गु०२ स० न० ज० र० गु०

S S S—I I S—I S I S I I S S—I I S I I I I S I S I S—S

**अस्मिन्नेव तृतीयपादके तजराः स्युः । प्रथमे च विरतिरार्षभं वदन्ति ।**

त० ज० र० न० न० न० ज० य०

S S I—I S I—S I S I I I—I I I—I I—I S I—I S S

**तच्छुद्धविराट्पुरःस्थितंत्रितयमपरमपि यदि पूर्वसमं स्यात् ॥३॥**

**अस्मिन्नेव तृतीयपादके = अस्मिन् एव वर्धमाननामके छन्दसि तृतीये पादे तजराः = तगण-जगण-रगणाः स्युः । प्रथमे च पादे विरतिः = यतिः स्यात् त्रितयम् = अपरमपि यदि अपरश्च**

पादत्रयम् उपस्थितप्रचुपितवत् भवेत् तदा तत् शुद्धविराट् पुरः, स्थितम् = शुद्धविराट् इति पदं पुरः पूर्वस्थितं यस्य तत् आर्षभम् = "शुद्धविराडार्षभम्" नाम छन्दो भवन्ति।

**भाषा**—वर्धमान नामक छन्द के तृतीय पाद म यदि तगण, जगण, रगण हों, और प्रथमपाद में ही यति की जाय, शेष तीन पाद = प्रथम, द्वितीय, चतुर्थ पाद उपस्थित प्रचुपित के तुल्य हों तो उसका नाम "शुद्धविराडार्षभ" छन्द होता है। ८

इत्युपस्थितप्रचुपितप्रकरणम्॥

विषमाक्षरपादं वा पादैरसमं दशधर्मवत्॥
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम्॥ ४॥

सम्प्रति ग्रन्थेऽनुक्तानां छन्दसां कथं ज्ञानं स्यात् कुत्र वा तदन्तर्भाव इति दर्शयितुं सामान्यनियममाह—

विषमेति। विषमाक्षरपादम्=विषमान्यक्षराणि यस्य तादृशाः पादा यस्य तत् अष्टदशसप्तनवाक्षरादिपादमित्यर्थः वा = अथवा पादैः असमम् = स्वीयैः पादैः विषमम् अर्थात् त्रिपादं षट्पादं वा दशधर्मवदित्युदाहरणम्। तथाहि—

दशधर्मं न जानन्ति धृतराष्ट्र! निबोध तान्॥
* मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः।
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश॥

इत्येवञ्जातीयकं षट्पदीगाथारूपं यच्छन्दः—अत्र नोक्तम् तत्सूरिभिः "गाथा" इति नाम्ना प्रोक्तम्॥ †

**भाषा**—जिसमें विषमाक्षर पाद हो अर्थात् गुरु लघु क्रम तथा संख्या का आदर न किया जाय अथवा जिसमें पादों की संख्या का भी नियम न हो जैसाकि—महाभारत के उद्योग पर्व विदुरनीति नामक प्रकरणान्तर्गत "दशधर्मम्" इत्यादि श्लोक में देखा गया है इत्यादि छन्द जो इस ग्रन्थ में नहीं कहे गए उन को "गाथा" जान लेना चाहिये।

# अथ षष्ठोऽध्यायः

उक्तानि समादिभेदेन वृत्तानि, सम्प्रति तेषामुत्पत्तिप्रदर्शनार्थं मुक्तानुक्तानाञ्च कविप्रयोगेषु दृश्यमानानां वृत्तानां सन्मूल-

* मत्तः मद्यादिना। प्रमत्तः=विषयासक्तत्वेनाऽनवहितः। उन्मत्तः=अपस्मारादिरोगेण।

† एतदध्यायान्तर्गतः बहूपयोग्यपि प्रपञ्चो मया परीक्षादित्सूनां कृते विशेषत उपयोगाभावं मत्वा न कृत इति ज्ञेयम्॥

ताद्योतनाय प्रस्तारादीन् षट् प्रत्ययान् निरूपयत्याचार्यः। तत्र प्रतीयते सङ्ख्यादि— रेभिरिति "प्रत्ययाः"। इति प्रत्ययशब्दोऽत्र योगरूढो वेदितव्यः। तेच षट् तदाह—

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया।
संख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः॥ १॥

"प्रस्तार" इति। (१) प्रस्तारः, (२) नष्टम्, (३) उद्दिष्टम्, (४) एकद्व्यादिलगक्रिया, (५) सङ्ख्या, (६) अध्वयोगश्च। एते षट् प्रत्ययाः।

भाषा—तीन प्रकार के वृत्तों का निरूपण करके उनकी उत्पत्ति के बोधनार्थ, तथा अनुक्त छन्दों के स्वरूपज्ञानार्थ इस अध्याय में प्रस्तारादि छः प्रत्ययों का निरूपण करते हैं। प्रस्तार, नष्ट, उद्दिष्ट, एकद्व्यादिलगक्रिया, सङ्ख्या, अध्वयोगभेद से "प्रत्यय" छः प्रकार के होते हैं। सङ्ख्यादि की प्रतीति का हेतु होने से प्रस्तारादि की इस शास्त्र में "प्रत्यय" संज्ञा है॥ १॥

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम्॥ २॥

नष्टादीनां प्रस्ताराधीनत्वात् प्रथमं प्रस्तारमाह—"पाद" इति। सर्वगुरौ=सर्वे गुरवो यत्र एवम्भूते पादे लिखिते सति, तत्र आद्यात्=प्रथमात् गुरोः=गुरोरक्षरात् (ऽ) एवमाकारचिन्हात् अधः=अधस्तात् लघुम्=(।) एवमाकारं न्यस्य=स्थापयित्वा, ततः-यथोपरि=उपरिलिखितगुरुलघुपङ्क्त्यनुसारम् तथा=तेनैव प्रकारेण शेषम्=आद्यावशिष्टं वर्णसङ्ख्यापूर्त्तिपर्यन्तं द्वितीयादिकं गुरुं लघुं वा लिखेत् अर्थात् यत्रोपरि गुरुः तत्र तदधस्तादपि गुरुः, यत्रोपरि लघुस्तदधस्तादपि लघुर्देयः भूयः=पुनरपि द्वितीयतृतीयादिपङ्क्तीनामधस्तात् अमुं विधिम्=लेखनप्रकारं कुर्यात्॥

ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत्।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः॥ ३॥

ऊने=न्यूने स्थाने गुरुनेव=वर्णान् दद्यात्=लिखेत्, यावत्=यावत्पर्यन्तं सर्वलघुः=सर्वे लघवो यत्र एवम्भूतः पादो भवेत्। छन्दोविचितिवेदिभिः=छन्दः शास्त्रज्ञैः अयम्=प्रकारः प्रस्तारः=प्रस्तारनामा समाख्यातः=कथितः॥

भाषा—प्रस्तार का प्रकार यह है कि—सर्वगुरु पाद में प्रथम गुरु (ऽ) के नीचे (।) लघु को लिखे, तब ऊपर की पङ्क्ति के अनुसार शेष रिक्त स्थान को

पूरा करे अर्थात् ऊपर लिखे गुरु लघु के अनुसार नीचे भी गुरु लघु को लिख कर पङ्क्ति पूरा करे, इसीप्रकार दूसरी तीसरी पङ्क्ति को लिखे, परन्तु जो शेष रिक्त स्थान हो उसमें गुरु वर्ण को ही लिखे, जब तक सर्वलघु पाद की प्राप्ति = समाप्ति नहीं होती तब तक उक्त विधि करता रहे । छन्दःशास्त्र के वेत्ता इस विधि को **"प्रस्तार"** कथन करते हैं ।

**तत्र प्रस्तारस्य स्थापनाप्रकारो यथा—**

| तत्र उक्तायां भेदद्वयम् यथा | | |
|---|---|---|
| १ | S | एकगुरुः |
| २ | । | एकलघुः |

| अत्युक्तायां भेदचतुष्टयम् यथा | | |
|---|---|---|
| १ | S S | द्विगुरुः |
| २ | । S | एकलघ्वेकगुरुः |
| ३ | S । | एकगुर्वेकलघुः |
| ४ | । । | द्विलघुः |

| मध्यायां भेदाष्टकम् यथा | | |
|---|---|---|
| १ | SSS | मगणः |
| २ | ।SS | यगणः |
| ३ | S।S | रगणः |
| ४ | ।।S | सगणः |
| ५ | SS। | तगणः |
| ६ | ।S। | जगणः |
| ७ | S।। | भगणः |
| ८ | ।।। | नगणः |

| प्रतिष्ठायां भेदषोडशकं यथा | |
|---|---|
| १ | S S S S |
| २ | । S S S |
| ३ | S । S S |
| ४ | । । S S |
| ५ | S S । S |
| ६ | । S । S |
| ७ | S । । S |
| ८ | । । । S |
| ९ | S S S । |
| १० | । S S । |
| ११ | S । S । |
| १२ | । । S । |
| १३ | S S । । |
| १४ | । S । । |
| १५ | S । । । |
| १६ | । । । । |

नष्टस्य यो भवेदङ्कस्तस्याऽर्द्धेऽर्द्धे समे च लः ।
विषमे चैकमाधाय तस्याऽर्द्धेऽर्द्धे गुरुर्भवेत् ॥ ४ ॥

प्रस्तारशोधनोपयोगि नष्टमाह—"नष्टस्य" इति । "अङ्क" इत्यतः परं तत्रेत्यध्याहार्यम् । ततश्च—नष्टस्य वृत्तस्य योऽङ्कः तत्र समे सति लः=लघुर्लेख्यः । तस्य च अर्धेऽर्धे=कृते अर्धाङ्के समे सति लः=लघुर्लेख्यः । विषमे सति तत्र अर्धीकरणायोगात् एकम्=अधिकम् आधाय=क्षिप्त्वा अर्धयेत् ततः तस्मिन् विषमे नष्टाङ्के गुरुर्भवेत्=गुरुर्लेख्य इत्यर्थः । "अर्धेऽर्धे" इति वीप्सया पुनः पुनः-करणं सूचितम् । अर्थात् यावत् इष्टनष्टवृत्तवर्णसंख्यापूर्त्तिर्न भवति तावदेवमेव कुर्यात् । अर्धे समे सति लघुः, विषमे च गुरुः, पुनरप्येवं यत्र २ वैषम्यं तत्र २ एकमधिकं प्रक्षिप्यार्धयेत् यावद्वर्णसंख्याप्रापणमिति पर्यवसितोऽर्थः ।

यथा त्र्यक्षरे प्रस्तारे पञ्चमं वृत्तं कीदृग् इति प्रश्ने कृते पञ्चमाङ्कस्य विषमत्वात् (ऽ) गुरुर्लेख्यः । ततो विषमो नार्धयितुं शक्य इति हेतोः पञ्चसंख्यायामेकं योजयित्वा, तस्यार्धीकरणे त्रित्वावच्छिन्नापि संख्या विषमा जायते, एवं त्र्यङ्कस्य विषमतया पुनरपि (ऽ) गुरुरेव लेख्यः । पुनरपि त्र्यङ्कस्य विषमत्वात् सैकस्यार्धे * अङ्कस्य समत्वात् (।) लघुरिति, एवम्–(ऽ ऽ ।) पञ्चमः तगणः सम्पद्यते । समोदाहरणं यथा—चतुरक्षरप्रस्तारे चतुर्थं वृत्तं कीदृगिति प्रश्ने समत्वात् लघुः (।) न्यस्यः । तदर्धेऽङ्के द्व्यङ्के पुनर्लघुः (।) । शिष्टेऽर्धितद्व्यङ्के एकस्याऽसमत्वात् गुरुः (ऽ) । शिष्टैकाङ्के सैके अर्धिते कृते पुनर्गुरु (ऽ) न्यस्यः । एवं सति चतुरक्षरप्रस्तारस्य—(। । ऽ ऽ) अयं चतुर्थो भेदोऽस्तीत्युत्तरं निर्गलति ।

**भाषा**—यदि कोई प्रस्तार का भेदज्ञान न रहे तो उसके निकालने की रीति को "**नष्टप्रत्यय**" कहते हैं । उसका प्रकार यह है कि—नष्ट का अङ्क यदि विषम अर्थात् १, ३, ५, ७, ९, ११ आदि हो तो सब से प्रथम गुरु (ऽ) लिखना चाहिये । यदि नष्ट का अङ्क २, ४, ६, ८, १०, १२ आदि समरूप हो तो लघु (।) लिखें । पुनः वृत्त समाप्ति पर्यन्त बचे को आधा २ करते जाना चाहिये । यदि वह आधा सम हो तो लघु (।), विषम हो तो उसको आधा करके गुरु लिखे, परन्तु विषम का आधा होना सम्भव नहीं इसलिये उसमें एक और मिलाकर आधा कर लेना चाहिये ।

जैसा किसी ने प्रश्न किया कि—तीन अक्षरवाले प्रस्तार का पञ्चम भेद क्या

* अर्थात् त्र्यङ्के एकस्याङ्कस्याधानात् चत्वारः सम्पद्यन्ते, तदर्धीकरणे द्व्यङ्कस्य समत्वात् ।

है ?। ऐसा प्रश्न करने पर (५) पञ्चम अङ्क विषम होने से प्रथम हमको ( ऽ ) गुरु लिखना चाहिये। पुनः उस पञ्चम संख्या में एक और मिलाकर छः बनते हैं, उनको आधा करें तो पुनः तीन का अङ्क विषम होने के कारण फिर ( एक अन्य ) ( ऽ ) गुरु लिखें। तीन का अङ्क विषम है, उसका आधा हो नहीं सक्ता इसलिए उस में एक और मिलावें तो चार बनते हैं, एवं यह अङ्क सम हो जायगा इसलिए एक लघु ( । ) लिखने से प्रष्टव्य त्रिवर्णात्मक जाति की संख्या पूर्ण होजाती है अतः आगे कोई आवृत्ति न करने से ( ऽ ऽ । ) यह उत्तर निकल आता हैं, अर्थात् त्र्यक्षर जाति का यह पांचवां भेद है। इस प्रकार समोदाहरण को भी जानलेना ॥ ४ ॥

**उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत्।**
**लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५ ॥**

उद्दिष्टमाह—" उद्दिष्टम् " इति। आद्यात्=अक्षरादारभ्य अन्तिमाक्षरपर्यन्तम् उपरि उपरि द्विगुणान् द्विगुणान् अङ्कान् समालिखेत् अर्थात् आद्याक्षरशिरसि एकमङ्कं ददेत् द्वितीयाक्षरशिरसि एकं द्विगुणीकृत्य द्विसङ्ख्याकमङ्कं दद्यात्, एवमेवाग्रेऽपि अन्तिमाक्षरावधि विधिं समापयेत्। ये तु तत्र=तेषु उपरिलिखितेषु लघुस्थाः=लघ्वक्षरशिरसि वर्त्तमाना अङ्काः तैः सैकैः=एकेनाधिकेन सहितैः मिश्रितैः=यथास्थानं योजितैः " उद्दिष्टम् " नाम प्रत्ययो भवेत्=स्यात्। तथाहिः—केनचित् पृष्टम् त्र्यक्षरे प्रस्तारे ( । । ऽ ) अयमन्त्यगुरुः कतमो भेदोस्तीति ?। तत्र आद्याक्षरोपरि ( ।<sup></sup> ) एवमेकमङ्कं दद्यात्। एकं द्विगुणीकृत्य द्वितीयोपरि ( । ) द्विकं लिखेत्, द्विसङ्ख्यामपि द्विगुणीकृत्य तृतीयोपरि ( ऽ ) चतुष्कं लिखेत्। अत्र लघुस्थ एकाङ्को द्व्यङ्कश्च तयोर्मिश्रणे त्रयो भवन्ति तत्र चैकाङ्कदाने चत्वारो ४जायन्ते, तदेवम् ( । । ऽ ) अयं चतुर्थो भेद इति कथयेत्। एवमेव " चतुरक्षरप्रस्तारे ( । ऽ । । ) अयं कतमो भेद " इति केनचित् पृष्टे सति, तत्र प्रथमाक्षरोपरि एकाङ्कं, द्वितीयाक्षरोपरि द्व्यङ्कं, तृतीयोपरि चतुरङ्कं, चतुर्थोपरि अष्टाङ्कं दद्यात्। यथा च उपरि निर्दिष्टम्। तत्र--लघ्वक्षरोपरि स्थिता १ । ४ ८ एकक-चतुष्काऽष्टकाः अङ्काः, तेषां संकलने सति त्रयोदश १३ सम्पद्यन्ते। एषा च संख्या विषमा अतोऽत्रान्यस्य एकाङ्कस्य मेलनं कर्त्तव्यम्, कृते च तन्मेलने १४ चतुर्दश जायन्ते। ततश्चेदमेव " १४ चतुर्दशोऽयं भेदः " इत्युत्तरमायाति।

**भाषा**—उद्दिष्ट प्रत्यय का यह प्रकार है कि—प्रथम अक्षर लघु ( । ) वा गुरु ( ऽ ) से लेकर अन्तिम अक्षर पर्यन्त ऊपर २ द्विगुण

२ अङ्क लिखो अर्थात् पहले अक्षर के शिर पर एक ( १ ) अङ्क लिखें, दूसरे अक्षर पर उस को द्विगुण करके दो ( २ ) का अङ्क देवें इस प्रकार अन्तिम अक्षर पर्यन्त पूर्व २ अङ्क को द्विगुण करके लिखते जाना चाहिए। उन ऊपर लिखे हुए अङ्कों में से लघु अक्षर के शिर पर जितने अङ्क हों उनका योग करके एक और मिला देवें तो उस जाति का भेद निकल आता है। जैसा कि–किसी ने प्रश्न किया कि तीन अक्षरवाली जाति के प्रस्तार का ( । । ऽ ) यह अन्त्य गुरु कौन सा भेद है ? तब इसके ऊपर प्रथम अक्षर पर ( । ) एक का अङ्क लिखना चाहिए दूसरे पर इस को द्विगुण करके ( । ) दो का अङ्क, और तीसरे पर दो को द्विगुण करके ( ऽ ) चार का अङ्क लिखें। लघु अक्षरस्थ अङ्कों के मिलाने से ( ३ ) होते हैं उन में एक और मिलाने से ( ४ ) बन जाते हैं, इस प्रकार ( । । ऽ ) यह भेद त्र्यक्षर जाति का चतुर्थ है यही उत्तर जानना। एवं यही रीति सर्वत्र जान लेनी चाहिए ॥ ५ ॥

**वर्णान्वृत्तभवान्सैकानौत्तराधर्य्यतः स्थितान्।**
**एकादिक्रमतश्चैतानुपर्य्युपरि निक्षिपेत् ॥ ६ ॥**
**उपान्त्यतो निवर्तेत त्यजेदेकैकमूर्ध्वतः।**
**उपर्य्याद्याद् गुरोरेवमेकद्व्यादिलगक्रिया ॥ ७ ॥**

एकद्व्यादिलगक्रियानामानं प्रत्ययमाह—**वर्णानिति।**

**वृत्तभवान् = उक्ताऽत्युक्तादिवृत्तनिष्ठान् वर्णान् = वर्णसंख्याकान् अङ्कान् सैकान् = एकेनाधिकेन सहितान् औत्तराधर्यतः = उत्तराधरभावेन स्थितान् = न्यस्तान् कुर्यात्। एतान् = पूर्वस्थापितान् अङ्कान् एकादिक्रमतः = एकद्वित्र्यादिक्रमेण उपरि उपरि = अङ्के निक्षिपेत् = मेलयेत्। ( मेल्यमानाङ्कीयसमसंख्याया उपरि क्षेपो मेलनं नतु स्वस्यैव स्वरूपतः, अन्यथा तदीये स्थाने शून्यत्वप्रसङ्गेन द्वितीयादिमेलनाया असम्भवात् ) अर्थात् अधस्तनमेकाङ्कं तदुपर्यङ्के क्षिप्त्वा द्व्यङ्कं कुर्यात्, द्व्यङ्कमपि तदुपरि वर्त्तमाने तृतीयेऽङ्के क्षिप्त्वा त्र्यङ्कं कुर्यात् इत्येवमुत्तरोत्तरं कुर्वाणः उपान्त्यतः = अन्त्यसमीपस्थात् अधोवर्त्तिनोऽङ्कात् * ऊर्ध्वतः = उपान्त्यादुपान्त्यादुपरि प्रत्यावृत्य ऐककं त्यजन् सन् निवर्त्तेत = विरामं कुर्यात्। एवं कृते सति आद्यात् = प्रथमात् गुरोः = सर्वगुरोः भेदात् उपरि = अनन्तरम् एकद्व्यादिलगक्रिया = एकद्वित्र्यादीनां लगक्रिया अयमेकलघुर्भेदः अयं द्विलघुर्भेदः, अयं त्रिलघुर्भेदः, तथा अयमेकगुरुः, अयं द्विगुरुः, अयं त्रिगुरुरित्यादिक्रिया ज्ञातव्येति**

* उपान्त्याङ्कावधि मेलनं कृत्वा तस्य ... भावः।

शेषः। अयमेव "मेरुप्रस्तार" इत्युच्यते। सर्वस्य उपरि स्थितः सर्वगुरुः, सर्वस्य अधःस्थितः सर्वलघुरिति सम्प्रदायः।

यथा त्र्यक्षरे वर्णतुल्यसंख्यावतः त्रीन् एककेन अङ्केन अधिकयित्वा चतुर एककान् विन्यस्येत्। तद्यथा {१ १ १ १}

ततः प्रथममधः स्थितमेकाङ्कं तदुपरि स्थिते एकाङ्के विनिपात्य द्व्यङ्कं विदध्यात्। यथा— {१ / १ / २ १ / १ १}

ततो द्व्यङ्कं तदुपरिवर्त्तिनि तृतीयस्मिन् एकाङ्के विनिपात्य त्र्यङ्कं सम्पादयेत्। यथा— {१ / ३ १ / २ १ / १ १}

इतोऽग्रे तदुपरि स्थिते चतुर्थे एककाङ्के त्र्यङ्कं नैव मेलयेत् "उपान्त्यतो निवर्त्तेत" इति नियमात् पुनरधोवर्त्तिनं द्वितीये मेलयित्वा त्र्यङ्कं सम्पादयेत् यथा— {१ / ३ १ / ३ २ १ / १ १ १ १}

अनया रीत्या एको भेद उपरिस्थितः सर्वगुरुः, ततः पङ्क्ते द्वितीयपादन्यासस्थाने वर्त्तमानः त्र्यङ्कः इति त्रयो भेदा एक गुरुकाः सन्तीति ज्ञानं भवति। अथ तदधःपङ्क्तेर्न्यासस्थाने त्र्यङ्क इति त्रयो भेदा एकगुरुकाः पुनस्तदधः पङ्क्तेर्न्यासस्थाने त्र्यङ्क इति त्रयो द्विगुरुकाः। एवं सर्वाधःपङ्क्तेर्न्यासस्थाने एकोऽङ्कः सर्वलघुकः। तत उपरिस्थेन त्र्यङ्केन एकलघुकाः त्रयोभेदाः। तत उपरिस्थेन त्र्यङ्केन द्विलघुका अपि त्रय एवेति सर्वत्र सुज्ञातव्यम्। आलोचयन्तु चाधोवर्त्तिनीर्विधा वर्त्तिताः तथाऽन्यत्रापि घटनीयम्—

**भाषा**—प्रस्तारों के नाना प्रकार के भेदों में से प्रत्येक रूप में "कितने लघु हैं, कितने गुरु हैं" इस प्रकार लघु गुरु संख्या प्रतीति के हेतुभूत उपाय का नाम "**एकद्व्यादिलगक्रिया**" है। इससे प्रत्येक प्रस्तार के स्वरूप लघु गुरु संख्या का ज्ञान होजाता है (वृत्तरत्नाकर की नारयणभट्टी टीका में बहुत विस्तार है और कई प्राकृत पिङ्गल ग्रन्थों में तथा भाषा के बृहत् छन्दोग्रन्थों में भी बहुत विस्तार से वर्णन किया गया है यहां बालोपयोगी तथा परीक्षोपयोगी न समझ कर मैंने अधिक न्यास नहीं किया)

वृत्त के वर्णों की जितनी संख्या हो उसमें एक और मिलाकर उतने ही एकङ्का लिखने चाहिये, उन एक एक अङ्कों को ऊपर की दूसरी पङ्क्ति में मिलादे परन्तु अन्त्य

के समीपवर्त्ती अङ्क को न मिलावे, ऊपर के एक २ अङ्क को छोड दे उन छोड़े हुए अङ्कों में ऊपर के सर्वगुरु प्रथम भेद से नीचे तक गिनते जाना चाहिये । इसप्रकार पहला भेद सर्वगुरु, दूसरा भेद एकगुरु, तीसरा भेद द्विगुरु होता है, इसीप्रकार नीचे से ऊपर की ओर विचार करने से सब से नीचे का भेद सर्वलघु, उसके ऊपर का एक लघु, तीसरा द्विलघुक, इत्यादि प्रकार को "एकद्व्यादिलगक्रिया" कथन करते हैं, जैसाकि—ऊपर संस्कृत में वर्त्तने का प्रकार लिख दिया है ।

**लगक्रियाङ्कसन्दोहे भवेत्संख्या विमिश्रिते ॥**
**उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ८ ॥**

क्रमप्राप्तां सङ्ख्यामाह-लगेति । लगक्रियाङ्कसन्दोहे = लगक्रियायां पूर्वोक्तायां लघुगुरुज्ञानव्यापारे येऽङ्काः सिद्धाः तेषां सन्दोहे=समूहे विमिश्रिते=अन्योन्यं योजिते सति "सङ्ख्या" भवेत् तद्यथा—त्र्यक्षरे लगक्रियायाः फलिता अङ्काः १-३-३-१-एकत्रित्र्येकात्मकाः सन्ति । एतेषामेकत्रित्र्येककानां मेलने अष्टौ सम्पद्यन्ते । एवञ्च—त्र्यक्षरप्रस्तारस्य अष्टभेदात्मिका सङ्ख्येति सिद्धं भवति । एवम्—चतुरक्षरे च १-४-६-४-१ इत्येकचतुःषट्चतुरेककात्मिका फलिता लगक्रिया । एतेषाञ्चाङ्कानां परस्परं संकलने षोडश सङ्ख्या सम्पद्यते । एतावन्त एव चतुरक्षरजातेः प्रस्तारभेदाः । प्रकारान्तरेण संख्यामाह—" उद्दिष्टेति " । वा = अथवा सैकः = एक सहितः उद्दिष्टाङ्कसमाहारः = उद्दिष्टानामङ्कानां समाहारः = मेलनम् इमाम् = सङ्ख्यां जनयेत् = उत्पादयेत् दर्शयेदितियावत् । यथा त्र्यक्षरे एकद्विचतूरूपा उद्दिष्टाङ्काः ( पूर्वरीत्या निर्दिष्टाः ) संकलने सति सप्त सम्पद्यन्ते, तत्र एकेन योजने अष्टौ जायन्ते एवं त्र्यक्षरप्रस्तारस्य अष्टभेदात्मिका संख्या निर्याति ।

**भाषा**—यदि लगक्रिया के फलित अङ्कसमुदाय को परस्पर मिलादें तो संख्या निकल आती है, किंवा—उद्दिष्ट प्रत्यय के अङ्कसमुदाय में एक अधिक मिला देने से से संख्या का ज्ञान हो सक्ता है ॥ ८ ॥

**संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ॥**
**वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥ ९ ॥**

अथाध्वयोगमाह—सङ्ख्यैवेति । सङ्ख्या=समादिवृत्तानां तत्तज्जातिषु संख्या पूर्वमुक्ता सा द्विगुणा कृता, पुनरेकोना सद्भिः = प्रस्तारादिविधिज्ञैः सः अध्वा = वृत्तप्रस्तारव्याप्यः प्रदेशः लेखनस्थानेयत्ता प्रकीर्त्तितः = उक्तः । अत्रार्थे उपपत्तिमाह—वृत्तस्येति । वृत्तस्य=वृत्तप्रस्तारस्य व्याप्तिः=व्यापनं स्थानम आङ्गुलिकी= अङ्गुलिपरिमिता भवति, अतः तथा अङ्गुलायामाः गुरुलघवः कार्याः

प्रस्तारस्यान्तरालं अङ्गुलिपरिमितमेवेत्यर्थः । यथा—त्र्यक्षराया जातेः प्रस्तारलेखार्थं कियत्स्थानमपेक्षितमिति शिष्यजिज्ञासायां त्र्यक्षरप्रस्तारस्य अष्टसङ्ख्यां द्विगुणीकृत्य सञ्जाता षोडश सङ्ख्या । तामेकेन ऊनयेत्, ततो जायते "पञ्चदश" इति सङ्ख्या । एवञ्च पञ्चदशाङ्गुलिपरिमितं स्थानमपेक्षणीयं भवतीत्युत्तरं फलति । तथाहि कोष्ठकलेखं प्रदर्शयामः—

**भाषा**—वृत्तभेद की संख्या को द्विगुण करके एक कम करदेने की विधि को "**अध्वा**" कहते हैं । प्रस्तार लेखस्थान का नाम "अध्वा" है । इस में उपपत्ति यह है कि—वृत्त की एक अङ्गुलपरिमित व्याप्ति=चौडापन हो और उसके नीचे एक अङ्गुलिपरिमित स्थान स्पष्टतया रिक्त=खाली दीखना चाहिये जैसाकि निम्न यन्त्र से स्पष्ट है—

| | | | | |
|---|---|---|---|---|
| १ | ऽ | ऽ | ऽ | प्रस्तारस्थानम् |
| २ | | | | रिक्तस्थानम् |
| ३ | । | ऽ | ऽ | प्रस्तार० |
| ४ | | | | रिक्त० |
| ५ | ऽ | । | ऽ | प्रस्तार० |
| ६ | | | | रिक्त० |
| ७ | । | । | ऽ | प्रस्तार० |
| ८ | | | | रिक्त० |
| ९ | ऽ | ऽ | । | प्रस्तार० |
| १० | | | | रिक्त० |
| ११ | । | ऽ | । | प्रस्तार० |
| १२ | | | | रिक्त० |
| १३ | ऽ | । | । | प्रस्तार० |
| १४ | | | | रिक्त० |
| १५ | । | । | । | प्रस्तार० |

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥१०॥

अधुना प्रतिज्ञातानुसारं समादिवृत्तभेदादिकं निरूप्य ग्रन्थकारः स्ववंशं कीर्त्तयन्नुपसंहरति "वंशे" इति । कश्यपस्य=तदाख्यस्य महर्षेः वंशे=अन्वये प्रकटगुणगणः=प्रख्यातशौचाचारचातुर्यादि गुणसमूहः पव्येकनामा विप्रः=ब्राह्मणोऽभूत् । स कीदृशः शैवसिद्धान्तवेत्ता=शिवो देवता एषां शैवाः शिवार्चनरताः तेषां सिद्धान्तानां वेत्ता ज्ञाता तथा वेदतत्त्वार्थबोधे=वेदानां तत्त्वार्थस्य=अद्वैतरूपस्य बोधे विमलतरमतिः=अतिमात्रं निर्मलधिषणः तस्य=पव्येकस्य सूनुः=पुत्रः केदारः=केदारनामा । स कीदृशः—शिवचरणयुगाराधनैकाग्रचित्तः=शिवचरणयुगस्य आराधनेन एकाग्रं चित्तं यस्य सः तेन अभिरामम्=मनोहरं सद्योबोधकरत्वात् इदं वृत्तरत्नाकराख्यम्=वृत्तरत्नाकरं नाम छन्दः=छन्दोग्रन्थ इत्यर्थः प्रविरचितम्=सम्यङ् निरमायीत्यर्थः ।

भाषा—कश्यप के वंश में शौचाचारादि उत्तमगुणोंवाला, शैवसिद्धान्त का ज्ञाता, वेदप्रतिपाद्य अद्वैतरूप अर्थ के साक्षात्कार में भ्रान्ति से रहित शुद्धबुद्धिवाला पव्येकनामा ब्राह्मण हुआ था । शिव=महादेव के आराधन से एकाग्रचित्तवाले, पव्येक के पुत्र केदार नामक पण्डित ने मनोहर अर्थात् आशु छन्दोज्ञान करा देने में समर्थ "वृत्तरत्नाकर" नामक छन्दोग्रन्थ का निर्माण किया है ॥ १० ॥

गुणवस्वङ्कचन्द्रेब्दे वैक्रमे शुभवत्सरे ।
ऊर्जे मासि दले शुक्ले गोपाष्टम्यां भृगौ दिने ॥ १ ॥
वृत्तरत्नाकरस्याऽस्य च्छन्दोग्रन्थस्य नामतः ।
टीकां रत्नप्रभां नाम विवृत्या सहितामहम् ॥ २ ॥
"सौभाग्यवत्या" विबुधाः ! परिपूरितवानिमाम् ।
तेन तुष्यतु माकान्त उमाकान्तश्च नित्यशः ॥ ३ ॥
पञ्चमे जार्जभूपेन्द्रे भारते सति शासति ।
इमामकार्षं सरलां टीकां संक्षिप्य सारतः ॥ ४ ॥
भाषार्थसहितां नित्यं छात्राणां हितकाम्यया ।
यदि मेऽत्र प्रमादः स्याच्छोधयन्तु विदां वराः ! ॥ ५ ॥
किन्तु मात्सर्यदोषेण मनसा विप्लवं विना ।
विवेचिता गुणा दोषाः प्रतिभान्ति विवेकिनाम् ॥ ६ ॥

मन्दा हृष्टा न वा हृष्टा भवेयुर्नात्र मे क्षतिः।
सारस्वतप्रसादो मां न जहाति कदाचन ॥ ७ ॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सतीविष्णुदेवीगर्भजेन स्यालकोट-वास्तव्य-जैनन्यायविशारद-कवितार्किक-दर्शनाचार्य-**नृसिंहदेव** शास्त्रिविरचितायां स्वोपज्ञ "सौभाग्यवती" विवृतिसहितायां **"रत्नप्रभा"** इत्याख्यायां वृत्तरत्नाकरव्याख्यायां षष्ठोऽध्यायः समाप्तः ॥

**समाप्तश्चायं सटीकोग्रन्थः।**

---

**(प्रश्नाः)**—* कति प्रत्ययाः किम्प्रयोजनाश्च ते ? प्रस्तारादीनां लक्षणं ब्रूहि ? तेषां रीतिं स्वयं ग्रन्थानुसारं वर्त्तयित्वा स्फुटीकुरु ? उ० पृ० ११२ तः १२० पर्यन्तम्।

अस्य ग्रन्थस्य प्रश्नरचनाशैली नैव कठिना, लक्ष्यलक्षणे एव प्रायः प्रष्टव्ये भवतः, अतोऽस्मत्प्रदर्शितरीत्या अनिर्दिष्टाः अपि प्रश्नाः स्वयं कल्प्याः, उत्तराणि च तथा तथोहनीयानि एवमभ्यासे परीक्षा सुगमा भविष्यतीति विदाङ्कुर्वन्तु छात्रवर्याः।

**इति सौभाग्यवती विवृतिः।**

# यदि

आप को प्राज्ञ, विशारद वा शास्त्री तथा प्राफ़ीशिंसी, हाई प्राफ़ीशिंसी वा आ परीक्षाओं की एवं अन्य सर्व प्रकार की संस्कृ तथा हिन्दी पुस्तकें

## सस्ते दामों

में चाहियें तो बिना किसी से पूछे झट

## मेहरचन्द लक्ष्मणदास अध्यक्ष संस्कृ पुस्तकालय, सैदमिट्ठा बाज़ार लाहौर

से मंगा देखिये ।

नया प्रास्पैक्टस छप गया है )॥ के टिकट भेजने पर आप की सेवा में पहुंच जावेगा ।